

# चन्दमामा

डिसेम्बर्- १९९५



## अन्तरङ्गम्






प्रतिकृतिमूल्यं रू. ५-००

वार्षिकं ग्राहकशुल्कं रू. ६०-००

# कठिनशब्दानां सान्दर्भिकाः अर्थाः

| | | | |
|---|---|---|---|
| अन्धश्रद्धा | - Blind faith | निमज्जनम् | - Immersion |
| अभिज्ञातवती | - Recognised | निष्पीड्य | - Squeeze out |
| आधारदण्डः | - Walking stick | परिखा | - Canal |
| आपणः | - Shop | प्रभूतम् | - Abundance |
| आवरणम् | - Lid | बन्धुम् | - To pack |
| आवर्तः | - Whirlpool | भित्तिः | - Wall |
| उपजीविका | - Life | मार्दवम् | - Softness |
| उपसागरः | - Gulf | रज्जुः | - Rope |
| उपायनम् | - Gift | वल्मीकः | - Ant-hill |
| उषितवन्तः | - Remained | विंशतिः | - Twenty |
| कनीयान् | - Younger one | व्रणितः | - Was wounded |
| कूपी | - Bottle | शकटः | - Cart |
| कोशातकी | - Ribbed gourd | शस्त्रवैद्यः | - Surgeon |
| खनिः | - Mine | शाखा | - Branch of a tree |
| गावः | - Cows | शुश्रूषा | - Nursing |
| गुहा | - Cave | षष्टिः | - Sixty |
| तटाकः | - Pond | सकृत् | - Once |
| तडित् | - Lightning | सञ्चेतुम् | - To save |
| दाम्पत्यम् | - Matrimony | सन्धिः | - Agreement |
| निदर्शनम् | - Example | स्पर्धितुम् | - To compete |





# चन्दमामा

संस्थापकः - 'चक्रपाणिः' सञ्चालकः - 'नागिरेड्डी'


## अपराधप्रवृत्तेः निर्मूलनम्

पञ्चाशद्वर्षेभ्यः पूर्वं प्रवृत्तस्य द्वितीयमहायुद्धस्य अनन्तरं प्रपञ्चस्य सर्वेषु अपि देशेषु अपराधिनां संख्या वर्धमाना एव अस्ति । अत्र आघातकरः अंशः नाम ५०% अपराधाः १५ - २५ वर्षवयस्कैः युवकैः एव क्रियन्ते इति ।

अविभक्तकुटुम्बे यदा विभागः भवति, तदा युवकैः स्वभविष्यस्य असुरक्षितता अनुभूयते । सर्वत्र उद्योगावसरः न्यूनीभवन् अस्ति इति कारणतः ते सुलभतया उद्योगम् अपि न प्राप्नुवन्ति । अन्यच्च मध्यमवर्गीयाणां धनिकानां च मध्ये विद्यमानः स्तरभेदः अपि तान् बाधते । एतादृशानाम् अंशानां कारणतः एव तेषु अपराधप्रवृत्तेः वर्धनं जायमानम् अस्ति इति अभिप्रयन्ति चिन्तकाः ।

अविभक्तकुटुम्बस्य विभागपद्धतेः कारणं युवसमूहः एव । मातापितृभ्यां दूरे स्वतन्त्रतया स्थातव्यम् इति या आकांक्षा अस्ति सा एव कारणम् एतस्य । युवजनानाम् एतादृशं चिन्तनं बहुषु सन्दर्भेषु विफलं जातं सत् मातापित्रोः सहवासे यत् रक्षणं लभ्यते स्म, तस्य नाशकम् अपि जातम् । एतस्मात् युवजनैः असुरक्षितता अनुभूयमाना अस्ति ।

विविधयोजनानां, यन्त्रागारस्थापनादीनां च कारणतः उद्योगावकाशाः यद्यपि वर्धमानाः सन्ति, तथापि विद्यावतां युवजनानां संख्या अपि महता प्रमाणेन वर्धमाना अस्ति इत्यतः उद्योगप्राप्त्यवकाशाः अल्पाः एव जाताः सन्ति । अपि च युवकेषु द्वेषभावः अहितकरस्पर्धाभावश्च वर्धमानः अस्ति । एतस्मात् निराशाम् अनुभवन्तः युवजनाः चिन्तयन्ति यत् सर्वविषयेषु अपि मया एव अग्रगण्येन भवितव्यम् इति । एतदर्थं विविधान् मार्गान् चिन्तयन्तः ते कदाचित् अपराधम् अपि कुर्वन्ति ।

एतादृशानाम् अपराधानां कारणीभूतैः युवजनसमूहैः एव अपराध-प्रवृत्तिनिवारणविषये अपि चिन्तनीयम् । युवसमूहस्य शक्तेः सम्पूर्णः उपयोगः समाजेन स्वीकरणीयः । समाजसेवाकार्यक्रमेषु प्रवर्तनार्थं युवसमूहः उत्तेजनीयः । एतस्मात् युवसमूहः समाजस्य बान्धव्यं प्राप्तुम् अर्हति ।


सम्पुटः - १२ डिसेम्बर् - १९९५ सञ्चिका - ९

प्रतिकृतिमूल्यं रू. ५.०० • वार्षिकं ग्राहकशुल्कं रू. ६०.००

# अयि, मातरः!

## 'पोलियो' नियन्त्रणं भवतीभिः एव कर्तुं शक्यम्।




### डिसेम्बर्मासस्य ९ दिनाङ्कः, जनवरीमासस्य २०तमः दिनाङ्कः च राष्ट्रियपोलियो-निरोधक-दिनत्वेन घोषितः अस्ति।

भवद्भिः इतः पुर्वमेव बालेभ्यः रोगनिरोधकम् औषधं दत्तं स्यात्। तथापि सुरक्षादृष्ट्या द्वितीयवारं पुनः डिसेम्बर् ९ दिनाङ्के, जनवरी २० दिनाङ्के वा समीपस्थं पोलियोनिरोधकशिबिरं प्रति स्वस्य अपत्यं नीत्वा औषधं दापयन्तु, यदि च भवदपत्यम् ऊनत्रिवर्षीयं स्यात्।

**स्वस्थबालानां भविष्यमेव अस्माकं देशस्य भविष्यम्।**

क्रि.श. २००० तमवर्षतः
पूर्वं भारतं पोलियोनिर्मुक्तं
देशं कर्तुं सहर्षं साहाय्यं
करवाम वयम्।



**PolioPlus**

# पोलियोप्लस्

## डिसेम्बर् - ९, १९९५
## जनवरी - २०, १९९६

एतौ दिनाङ्कौ सम्यक् स्मरन्तु।
यतः एतौ दिनाङ्कौ
भवतां बालानां
संरक्षणस्य
दिवसौ स्तः।



## वार्ताविशेषः

# थायुल्याण्ड्देशे सप्तपक्षाणां शासनम्

थायुल्याण्ड्देशे जुलैमासस्य द्वितीये दिनाङ्के प्रवृत्ते संसन्निर्वाचने चार्ट्थायुपक्षः अधिकानि स्थानानि प्राप्नोत् । तत्पक्षस्य नायकः बान् हार्न् शिल्पा अर्चावयः थायुल्याण्ड्देशस्य २१ तमः प्रधानमन्त्री जातः च । ततोऽपि पूर्वं डेमोक्राटिक्पक्षस्य नायकः चुवान्लीक्पाय् ३३ मासान् यावत् प्रधानमन्त्रिपदव्याम् आसीत् ।

थायुल्याण्ड् पूर्वं 'सयाम्' इति प्रसिद्धम् आसीत् । तेषु दिनेषु तत्र शासनं महाराजाधीनम् आसीत् । १९३२ तमे वर्षे प्रवृत्तायाः प्रतिभटनायाः परिणामतः सर्वकारस्य शासनं व्यवहारपथे आगतम् । तदानीन्तनस्य नियमस्य अनुसारं राज्यस्य शासकः राजा, प्रजानां पालकः प्रधानमन्त्री च इति निर्णयः कृतः । इतरदेशैः आक्रान्तुं पालयितुं वा अशक्तः देशः नाम 'सयाम्' । एतत् 'सयाम्'वैशिष्ट्यम् ।

१९३९ तमे वर्षे 'सयाम्' इति नाम 'थायुल्याण्ड्' इति परिवर्तनं प्राप्नोत् । १९४६ तमे वर्षे सिंहासनारूढः 'भूमिबोल् अदुल्यदेज्' गतेभ्यः पञ्चाशद्-वर्षेभ्यः थायुल्याण्ड् पालयन् आसीत् । सः प्रकटितवान् यत् - बान् हार्न् शिल्पा अर्चावर्यः २१ तमः प्रधानमन्त्री इति ।

थायुल्याण्ड् - लोकसभायाम् आहत्य ३९१ स्थानानि आसन् । अस्मिन् निर्वाचने चार्ट्थायुपक्षः अधिकानि स्थानानि, तन्नाम ९१ स्थानानि, प्राप्नोत् । डेमोक्रटिक्पक्षः ८२ स्थानानि प्राप्तवान् अस्ति । उभयोः अपि पक्षयोः बहुमतं न आसीत् इत्यतः न्यू यास्पिरेशन्पक्षः (५७) पलाङ्गधर्मा (२३) सोषल् याक्शन्पक्षः (२२) थायु सिटिजन्स्पक्षः (१८) मास्पक्षः (३) एते पञ्च विरोधपक्षाः चार्ट्थायुपक्षस्य सहयोगं सूचितवन्तः । एतस्मात् कारणात् प्रधानमन्त्रिपदवीप्राप्त्यर्थं बान् हार्न् शिल्पा आर्चावर्येण बहुमतानि प्राप्तानि अभवन् । तदा १८ स्थानानि प्राप्तवान् नामथायुपक्षः अपि आर्चावर्याय स्वसहयोगम् अददात् । एवं सप्तपक्षाणां मेलनेन २३३ स्थानानि प्राप्तानि अभवन् ।

प्रथमपञ्चपक्षेभ्यः उपप्रधानमन्त्रिपदवी दातव्या । नामथायुपक्षाय रक्षणव्यवस्था, संवहनव्यवस्था, कृषिविभागः, विदेशीय-व्यवहारनिर्वहणम् इत्यादीनां मन्त्रिपदवी दातव्या इति निर्णयः कृतः अस्ति ।

निर्वाचनसमये नायकाः प्रतिज्ञां कृतवन्तः सन्ति यत् - भूमेः अभिवृद्धिः दारिद्र्यनिवारणं च अस्माकम् आद्यं कर्तव्यम् इति ।





# चतुरः जयकीर्तिः

पूर्वं पाण्डुरङ्गपुरनामके कस्मिंश्चित् लघुनगरे जयकीर्तिनामकः कश्चित् वणिक् आसीत् । यद्यपि सः वाणिज्ये प्रभूतं धनं सम्पादितवान् आसीत्, तथापि सन्तानराहित्यकारणतः खिन्नः आसीत् सः । सौभाग्यवशात् केषाञ्चित् वर्षाणाम् अनन्तरं सः पुत्रद्वयं प्राप्तवान् । तयोः एकस्य नाम विनयपालः इति । अपरस्य नाम विजयपालः इति । बहुकालतः सन्तानभाग्यं न आसीत् इति कारणतः पुत्रयोः जननेन जयकीर्तिः तत्पत्नी रूपवती च अत्यन्तं सन्तुष्टौ जातौ । अतः तौ बालौ प्रीत्या लालितवन्तौ ।

यथा यथा पुत्रौ प्रवृद्धौ तथा तथा तयोः स्वभावे कश्चन विशिष्टः भेदः दृष्टिगोचरः जातः । बाल्यादारभ्य अपि विजयपालः स्वावलम्बी सन् स्वकीयानि कार्याणि स्वयं कर्तुम् इच्छति स्म । सर्वथा एतद्विरुद्धः आसीत् विनयपालस्य स्वभावः । प्रत्येकस्मिन् कार्ये अपि सः मातरं दासीं वा अवलम्ब्य एव तिष्ठति स्म ।

पुत्रयोः स्वभावे एतादृशं भेदं दृष्ट्वा माता रूपवती चिन्ताक्रान्ता यत् कनीयान् पुत्रः विजयपालः मत्तः दूरं गच्छेत् इति । पत्न्याः चिन्तां ज्ञात्वा जयकीर्तिः - ''यस्य यथा रुचिः तथा सः व्यवहरतु नाम । एतद्विषये अस्माभिः अधिकं न चिन्तनीयम्'' इति उक्तवान् ।

यदा पुत्रौ विद्याभ्यासं समापितवन्तौ तदा जयकीर्तिः पुत्रौ आहूय स्वयं किञ्चित्कालं यावत् शिक्षणं दत्तवान् । एतेन सः ज्ञातवान् यत् एतयोः विजयपालः एव तीक्ष्णमतिः इति । जयकीर्तिः सन्तुष्टः अभवत् । सर्वेऽपि विजयपालं श्लाघन्ते स्म । तथैव विनयपालः इव गुणशीलाः

पितृवाक्यपरिपालकाः लोके अङ्गुलिगणनीयाः एव भवन्ति इत्यपि वदन्ति स्म ।

कानिचन दिनानि अतीतानि । जयकीर्तिः विजयपालम् आहूय - "भवान् इतःपरं स्वयं वाणिज्यस्य आरम्भं करोतु । किन्तु मम एका सूचना अस्ति । यदा अहं वाणिज्यम् आरब्धवान् तदा पर्याप्तमात्रेण मूलधनं नासीत् इत्यतः मया बहवः अंशभागिनः योजनीयाः अभवन् । यद्यपि बुद्धिमत्तायां मम भागः अधिकः आसीत्, तथापि लाभांशे सर्वेभ्यः समानभागः दातव्यः आसीत् । तथापि प्रभूतं धनं सम्पादितवान् अस्मि । अतः इदानीं भवतः वाणिज्यस्य निमित्तम् अहमेव मूलधनं दातुं शक्नोमि । भवान् धनं स्वीकृत्य अमलापुरं गच्छतु । तत्र नारिकेलस्य वाणिज्यं सुष्ठु भविष्यति । स्वबुद्धिशक्त्या वाणिज्यस्य वर्धनं करोतु भवान्" इति उक्तवान् ।

विजयपालः आनन्देन - "तथैव भवतु" इति अङ्गीकारं सूचितवान् । तदा जयकीर्तिः पुनः उक्तवान् - "अपरः कश्चन विचारः अस्ति । वाणिज्ये मम अंशभागी यः आसीत् सः रामचन्द्रशर्मा स्वपुत्र्योः मालिनीमाधव्योः विवाहं भवद्भ्यां सह निर्वर्तयितुम् इच्छति । ते उभे अपि सुशीले एव । तयोः माधवी ज्येष्ठा । अतः विनयपालः तां परिणेष्यति चेत् वरम् । मालिनीं परिणेतुं भवान् सिद्धः खलु?" इति पृष्टवान् ।



विजयपालः क्षणं यावत् मौनं स्थित्वा - "मालिन्याः विषये न केवलम् अहं श्रुतवान्, अपि तु तां दृष्टवान् अस्मि अपि । अतः तां परिणेतुम् अहं सिद्धः अस्मि" इति उक्तवान् ।

पुत्रयोः विवाहवार्तां श्रुत्वा रूपवती नितरां सन्तुष्टा अभवत् । किन्तु विजयपालः वाणिज्यार्थम् अमलापुरं गमिष्यति इति ज्ञात्वा दुःखिता अपि अभवत् सा । केषाञ्चन दिनानाम् अनन्तरं माधवी-विनयपालयोः, मालिनी-विजयपालयोः च विवाहः सवैभवं सम्पन्नः ।

विवाहानन्तरं जयकीर्तिः मालिन्या विजयपालेन च सह अमलापुरं गत्वा स्नुषा-



पुत्रयोः वासार्थं व्यवस्थां कल्पितवान् । प्रत्यागमनसमये पुत्रम् उद्दिश्य – "पुत्र! सुदीर्घकालिकेन वाणिज्येन अहं श्रान्तः अस्मि । समुद्रतीरे स्थिते अस्मिन् अमलापुरे वासेन उल्लासः स्यात् एव । अतः अहं पत्न्या सह कानिचन दिनानि अत्र एव स्थातुम् इच्छामि । एतद्विषये भवतः अभिप्रायः कः?" इति पृष्टवान् ।

पितुः वचनं श्रुत्वा विजयपालः मन्दहासपूर्वकं – "भवान् मां यदा अमलापुरगमनवार्ताम् उक्तवान् तदा एव अहं ज्ञातवान् यत् भवान् कदाचित् एवं मां पृच्छेत् इति । तात! एतत् भवतः गृहम् । स्वगृहे विश्रान्तिं स्वीकर्तुं कस्यापि अनुमतेः आवश्यकता नास्ति । वर्धमानाः पुत्राः स्वतन्त्रतया चिन्तनार्थम् अवकाशं यथा प्राप्नुयुः तथा करणं ज्येष्ठानां कर्तव्यं यथा, तथैव वृद्धमातापित्रोः विश्रान्त्यर्थं व्यवस्था, तयोः सेवा च पुत्रयोः कर्तव्यम्" इति उक्तवान् ।

एतत् उत्तरं श्रुत्वा सन्तुष्टः जयकीर्तिः पाण्डुरङ्गपुरम् आगत्य पत्नीं सर्वं निवेदितवान् ।

सर्वं श्रुत्वा रूपवती पतिम् उद्दिश्य – "वाणिज्यव्यवहारतः भवान् किं निश्चयेन श्रान्तः? किं भवान् इदानीं वस्तुतः विश्रान्तिम् इच्छति?" इति पृष्टवती ।

तदा जयसिंहः हसन् – "मम वचनम् असत्यं स्यात् इति भवत्याः सन्देहः किमर्थम्?" इति प्रतिप्रश्नं कृतवान् ।

तदा रूपवती उक्तवती – "मम तु भाति यत् विश्रान्त्यर्थं न अयं कालः इति । वाणिज्यव्यवहारादिविषये भवतः साहाय्यं न अपेक्षेत विजयपालः । किन्तु विनयपालः भवन्तं विना क्षणमपि स्थातुं न शक्नोति । भवतः अनुपस्थितौ वाणिज्ये नष्टम् अनुभूतवान् इति वदति स्म सः । दुर्बलस्य विनयपालस्य साहाय्यकरणमेव आवयोः कर्तव्यम् । अपि च आवयोः गमनं विनयपालः स्नुषा च प्रायः न अङ्गीकुरुतः अपि" इति उक्तवती ।

पत्न्याः वचनं श्रुत्वा जयकीर्तिः – "एवं तर्हि भवती एकं कार्यं करोतु । कानिचन दिनानि यावत् विजयपालस्य गृहे स्थित्वा आगच्छावः इति पुत्रस्य अनुपस्थितौ स्नुषां

वदतु । ततः पश्याम किं भवतीति'' इति ।

तदा रूपवती क्षणं विचिन्त्य - ''भवतु! तथैव करोमि । विनयपालं विहाय भवतः दूरगमनं स्नुषा माधवी कदापि न अङ्गीकुर्यात् इति भाति मम'' इति उक्त्वा ततः गतवती ।

अनन्तरदिने म्लानमुखतया आगतवतीं पत्नीं दृष्ट्वा जयकीर्तिः पृष्टवान् - ''माधवीम् उक्त्वा आगतवती वा भवती ?'' इति ।

तदा रूपवती अश्रूणि मार्जयन्ती - ''आम्! उक्तवती । सा किम् उक्तवती इति शृणोतु तावत् । आवयोः अत्र उपस्थितिः तस्यै न रोचते इति भाति । यदा अहं विषयम् उक्तवती तदा आरम्भे मौनं स्थितवती सा । किन्तु अनन्तरं 'भवतु अम्ब, यथा भवतोः मम पतिः प्रीतिपात्रं, तथैव विजयपालः अपि प्रीतिपात्रम् एव किल' इति वदन्ती पलायनवादम् आश्रितवती'' इति उक्तवती ।

एतत् श्रुत्वा ''तर्हि अग्रिमगमनाय भवत्याः आक्षेपः नास्ति खलु'' इति पृष्टवान् जयकीर्तिः ।

''किन्तु विनयपालः इतः आवयोः गमनम् अङ्गीकुर्यात् खलु'' इति उक्तवती रूपवती ।

''अहं तस्य अङ्गीकारम् अहं प्राप्स्यामि । प्रयाणार्थं सज्जा भवतु भवती'' इति पत्नीम् उक्तवान् जयकीर्तिः ।

अनन्तरदिने सः पुत्रम् आहूय सर्वम् उक्त्वा - ''मम प्रत्यागमनं कदाचित् न भवेत् अपि । अत्रत्यं समग्रं वाणिज्यं





जयकीर्तिः नितरां सन्तुष्टः । कदाचित् सः पुत्रं विजयपालम् आहूय - "पुत्र!, केभ्यश्चित् दिनेभ्यः पूर्वं यदा अहम् अत्र आगतवान्, तदा भवान् विषयं पूर्वमेव ऊहितवान् आसीत् । किन्तु इदानीं भवतः अग्रजः उत्तमः वणिक् इति कीर्तिं प्राप्तवान् अस्ति । एवं स्थिते अहं किं वदेयम् इति किं भवान् ऊहितुं शक्नुयात्?" इति पृष्टवान् ।

"तत्र कः क्लेशः? अत्रत्यं वाणिज्यं स्थगयित्वा स्वस्थानं पाण्डुरङ्गपुरं प्रति गच्छाम इति खलु आशयः इदानीं भवतः?" इति पितरं हसन् पृष्टवान् विजयपालः ।

तयोः पृष्ठतः स्थित्वा सम्भाषणं शृण्वती आसीत् रूपवती । सा पतिम् उद्दिश्य - "पाण्डुरङ्गपुरं प्रति गमनं समीचीनम् । किन्तु अत्रत्यवाणिज्यस्य स्थगनं किमर्थम्? अत्रत्यं वाणिज्यं स्थगनीयम् एव इति यदि निर्णयः, तर्हि पाण्डुरङ्गपुरं त्यक्त्वा किमर्थम् अत्र आगतम्?" इति पृष्टवती ।

"भवत्याः प्रश्नानाम् उत्तरं पाण्डुरङ्गपुरं प्रति गमनानन्तरं विस्तरेण वक्ष्यामि" इति उक्तवान् जयकीर्तिः ।

सर्वेऽपि पाण्डुरङ्गपुरं प्रत्यागतवन्तः । रूपवती पुनश्च अमलापुरे पृष्टान् प्रश्नान् पतिं पृष्टवती । तदा जयकीर्तिः - "मनसि उद्भूतान् सन्देहान् निःसङ्कोचं पृच्छन्त्या भवत्या युक्तम् एव कृतम् । अन्यथा 'मम

भवता एव निर्वोढव्यम् । सन्दिग्ध-परिस्थितौ भवान् श्वशुरस्य मार्गदर्शनं स्वीकरोतु । एकं तु स्मरतु । वणिजा सर्वदा समयस्फूर्त्या निर्णयाः स्वीकरणीयाः भवन्ति । तादृशः न केवलं वाणिज्ये, अपि तु जीवने अपि जयशाली भविष्यति" इति उक्त्वा द्वितीयपुत्रस्य गृहं प्रति प्रस्थितवान् ।

अमलापुरं प्रति गमनानन्तरमपि जयकीर्तिना पाण्डुरङ्गपुरस्य वार्ताः ज्ञायन्ते स्म । मासद्वयाभ्यन्तरे विनयपालः अपि उत्तमः वणिक् इति कीर्तिं सम्पादितवान् आसीत् । पुत्रः पितरम् अतिशेते इति जनाः अभिप्रायं प्रकटयन्ति स्म ।

एवं विनयपाले जातं परिवर्तनं ज्ञात्वा

पतिः पुत्रयोः विषये पक्षपातम् आचरति इति चिन्तनम् अभविष्यत् भवत्याः । वाणिज्यतन्त्राणि ज्ञातुं, स्वयं निर्णयं कर्तुं, समयस्फूर्त्या व्यवहर्तुं च विनयपालः असमर्थः आसीत् । एतं विषयं भवती जानाति एव । तस्य अन्यावलम्बन-स्वभावम् अहं पूर्वमेव अवलोकितवान् आसम् । तदर्थमेव बुद्धिमतीं माधवीं विनयपालः वृणोतु इति चिन्तितवान् आसम् अहम्'' इति उक्तवान् ।

तस्य वचनस्य समाप्तितः पूर्वमेव मुखे सन्देहभावं प्रदर्शितवती रूपवती । एतत् दृष्ट्वा जयकीर्तिः - ''नूतनः कोऽपि सन्देहः भवत्याः मनसि उत्पन्नः अस्ति इति भाति । कः सः सन्देहः भवत्याः?'' इति पत्नीं पृष्टवान् ।

''तथा चेत् बुद्धिमती माधवी विनयपालाय युक्ताः सूचनाः यच्छन्ती साहाय्यं कर्तुम् अशक्ष्यत् खलु? किमर्थं तथा न कृतवती सा?'' इति पृष्टवती रूपवती ।

''तस्यापि कारणं वदामि । शृणोतु तावत्'' इति वदन् जयकीर्तिः - ''आवयोः उपस्थितौ विनयपालः सर्वमपि मां पृष्ट्वा एव करोति इति माधवी अवलोकितवती आसीत् । पत्युः एतम् अन्यावलम्बन-स्वभावं सा न इच्छति स्म । अतः एव आवयोः गमनविषये सा निर्लिप्ततां प्रदर्शितवती । किन्तु सूक्ष्मग्राहिणा विजयपालेन पूर्वमेव सर्वम् अवगतम् आसीत् । आवयोः अनुपस्थितौ विनयपालः अनिवार्यतया स्वतन्त्रतया चिन्तनम् आरब्धवान् । वाणिज्यसमस्यानां परिष्करणे प्रबुद्धतां च प्राप्तवान् । मम उपायः फलितः । अतः अहं निर्णीतवान् यत् इतः परं विजयपालेन अमलापुरे भवितव्यम् नास्ति इति'' इति उक्तवान् ।

एतत् श्रुत्वा रूपवती आश्चर्यम् अनुभवन्ती ''किञ्चिदपि अकथयन् सुमहतीं दीर्घां योजनां कृतवान् आसीत् खलु भवान्'' इति पतिं हृत्पूर्वकं श्लाघितवती ।



# वृद्धस्य चातुर्यम्

कदाचित् कश्चित् वृद्धः देशपर्यटनं कुर्वन् आसीत् । प्रयाणसमये सः कस्यचित् पर्वतस्य मूले प्रकाशमानां काञ्चित् कूपीं दृष्टवान् । कुतूहलेन कूपीं स्वीकृत्य तस्याः आवरणम् अपनीतवान् सः । तत्क्षणे कश्चन पिशाचः ततः बहिः आगत्य - ''मां बन्धविमुक्तं कृतवान् अस्ति भवान् । अतः भवतः एकाम् अपेक्षां पूरयितुम् इच्छामि । किन्तु भवतः अपेक्षा स्वार्थरहिता स्यात् । 'राजा भवितुम् इच्छामि', 'राजकुमारी आवश्यकी' इत्यादयः अपेक्षाः सन्ति चेत् अहं पूरयितुं न शक्नोमि'' इति उक्तवान् ।

अनुक्षणं सः वृद्धः - ''पञ्चाशद्वर्षेभ्यः पूर्वं मम अग्रजेन सह कलहः प्रवृत्तः । तदा आरभ्य आवां पृथक् जातौ । इदानीं सः माम् अनुजं मत्वा यथा प्रीत्या अङ्गीकुर्यात् तथा करोतु'' इति प्रार्थितवान् ।

''अहो! कीदृशी अपूर्वा अपेक्षा'' इति कथयन् पिशाचः अदृश्यः भूत्वा पुनः किञ्चित्कालानन्तरं प्रत्यक्षीभूय - ''भवतः अपेक्षां पूरितवान् अस्मि । भवतः अग्रजः भवन्तम् अन्विष्य आगमिष्यति'' इति उक्तवान् ।

वृद्धः केनचित् सन्देहेन पीडितः इव - ''एतस्याम् अपेक्षायां स्वार्थः अस्ति इति न चिन्तयति खलु भवान्?'' इति पृष्टवान् ।

''तथा कदापि न चिन्तयामि अहम् । बहुकालस्य वियोगस्य अनन्तरम् इदानीं भवान् अग्रजस्य सामीप्यम् इच्छन् अस्ति खलु? वार्धक्ये मरणात् भयं वा भवतः?'' इति पृष्टवान् पिशाचः ।

''तादृशं भयं मम नास्ति । मम अग्रजः मत्तः दशवर्षेभ्यः ज्येष्ठः । सः एतस्य राज्यस्य राजा, पुत्ररहितः चापि । अतः तस्य अद्वितीयः उत्तराधिकारी अहम् एव'' इति उक्तवान् वृद्धः ।

तत् उत्तरं श्रुत्वा पिशाचः - ''अहो! वृद्धस्य चातुर्यम्'' इति वदन् ततः अदृश्यः अभवत् ।






## ४

(भाललोचनराक्षसात् आत्मानं रक्षन्तः रूपधरः, तस्य अनुचराः च महानौकाद्वीपं प्राप्य, तं द्वीपं परिपालयतः चित्राश्वस्य साहाय्यं प्राप्तवन्तः । चित्राश्वः रूपधराय पवनयुक्तं चर्मस्यूतं दत्तवान् । ततः रूपधरस्य नौकाः स्वदेशं प्रति प्रस्थिताः । किन्तु अन्तिमक्षणे रूपधरस्य अनुचराः पवनयुक्तं चर्मस्यूतम् उद्घाटितवन्तः । पवनानां प्रभावेण रूपधरस्य नौकाः ध्रुवप्रदेशं प्राप्तवत्यः । तत्रत्याः राक्षसाः रूपधरस्य अनुचरान्, तदीयाः नौकाः च नाशितवन्तः । रूपधरस्य नौकामात्रम् आत्मानम् अरक्षत् । अनन्तरम् ..................)

रूपधरः स्वनौकास्थैः अनुचरैः सह स्वप्रयाणम् अनुवर्तितवान् । मृत्युतः रक्षितः जातः इति सः सन्तुष्टः चेदपि तदीयासु इतरनौकासु स्थिताः अन्ये अनुचराः मृताः इत्यतः तस्य अतीव दुःखं जातम् ।

केचन मासाः अतीताः । रूपधरस्य नौका कञ्चित् द्वीपं प्राप्नोत् । तस्मिन् द्वीपे सुकेशिनीनामिका काचित् देवता आसीत् । तस्याः वेणी दीर्घा नयनमनोहरा च आसीत् । सा सूर्यसंसर्गात् वरुणराजस्य पुत्र्यां जन्म प्राप्तवती आसीत् । सा मानवभाषां जानाति स्म । किन्तु सा मानवानां हितैषिणी न आसीत् ।

रूपधरः सुकेशिनीं न जानाति । तदीया नौका यदा तीरं प्राप्ता, तदा स्वनौकां तत्रैव संस्थाप्य रूपधरः, तस्य अनुचराः च दिनद्वयं तत्रैव उषितवन्तः । दिनद्वयं ते



निरुत्साहेन एव तत्र स्थितवन्तः । तृतीये दिने प्रातः सूर्योदयानन्तरं रूपधरः आयुधानि गृहीत्वा उन्नतं कञ्चित् भूप्रदेशम् आरुह्य परितः सिंहावलोकनं कृतवान् । कोऽपि मानवः न दृष्टः तेन । किन्तु सुदूरे वृक्षाणां मध्ये स्थितात् सुकेशिनीगृहात् बहिः गच्छन् धूमः दृष्टः तेन ।

एतत् दृष्ट्वा रूपधरः चिन्तितवान् यत् - स्वयं तत्र गत्वा तद्गृहे के निवसन्ति इति ज्ञात्वा आगन्तव्यम् इति । अपि च सः चिन्तितवान् - 'ततः नौकासमीपं गत्वा भोजनं समाप्य केचन अनुचराः तद्गृहं प्रति प्रेषणीयाः । तत्रत्यः विचारः ज्ञातव्यः च' इति । किन्तु भोजनार्थम् आहारः नास्ति । किं करणीयम् इति चिन्तयन् रूपधरः ततः स्वनौकासमीपं प्रस्थितः । तावता कश्चित् हरिणः रूपधरस्य अभिमुखम् आगतः । महान् आतपः आसीत् इत्यतः सः हरिणः पिपासानिवारणार्थं समीपस्थां नदीं प्रति गच्छन् आसीत् ।

रूपधरः वेगेन तस्य हरिणस्य समीपं गत्वा तं पृष्ठे आयुधेन घातितवान् । तस्मात् अधः पतितः हरिणः वेदनाम् अनुभवन् प्राणान् त्यक्तवान् । रूपधरः लताभिः रज्जुं निर्माय रज्ज्वा हरिणस्य पादान् बद्धवान् । रज्जुं स्वकण्ठे बद्ध्वा सः हरिणं स्कन्धे संस्थाप्य स्वनौकासमीपं गतवान् । सः आत्मना आनीतं हरिणम् अनुचराणां पुरतः संस्थाप्य उक्तवान् - ''मित्राणि! अस्माकं मरणकालः इतोऽपि बहुदूरे अस्ति । यमदेवेन अपि बहुकालं यावत् अस्माकं प्रतीक्षा करणीया । आहारे सत्यपि अस्माभिः बुभुक्षा अनुभोक्तव्या नास्ति'' इति ।

रूपधरस्य एतत् वचनं श्रुत्वा तदीयेषु अनुचरेषु उत्साहः उत्पन्नः । ते रूपधरेण आनीतं हरिणं पक्त्वा खादित्वा तस्यां रात्रौ अपि तत्रैव शयनं कृतवन्तः ।

अनन्तरदिने प्रातःकाले एव रूपधरः स्वानुचरान् मेलयित्वा उक्तवान् - ''मित्राणि! अस्माकं तु एषः प्रदेशः नूतनः । अत्र का दिक् कुत्र इत्येव न ज्ञायते । एतादृशपरिस्थितौ किं करणीयम् इति महती चिन्ता । तथापि मौनं स्थातुं न शक्यते । कोऽपि उपायः चिन्तनीयः

अस्माभिः । इतः अनतिदूरस्थम् उन्नतं भूप्रदेशम् आरुह्य परितः सिंहावलोकनं कृतवान् अस्मि अहम् । एषः प्रदेशः लङ्का इव अस्ति । कुत्रापि मानवाः न दृश्यन्ते । किन्तु अस्मिन् प्रदेशे वृक्षाणां गुल्मानां च मध्ये किञ्चन गृहं दृश्यते । तत्र केऽपि निवसन्ति इति अहं चिन्तयामि । यतः तस्मात् गृहात् धूमः आगच्छति'' इति ।

एतत् श्रुत्वा रूपधरस्य अनुचराणां समाधानं जातम् । किन्तु किञ्चिदिव भयम् अपि अभवत् । यतः तैः पूर्वं एतादृशप्रसङ्गे महत् कष्टम् अनुभूतम् आसीत् । प्रथमवारं भाललोचनराक्षसतः, द्वितीयवारं नरभक्षकाणां राक्षसानां कारणतः च ते महतीं पीडाम् अनुभूतवन्तः आसन् । तं सन्दर्भं स्मरन्तः दुःखं सोढुम् अशक्ताः ते रोदनं कृतवन्तः ।

अनन्तरं रूपधरः अनुचरान् सान्त्वयित्वा गणद्वयेन अनुचरान् विभक्तवान् । एकस्य गणस्य नायकत्वेन मायाविनामकं साहसिनं नियोजितवान् । अपरस्य गणस्य नायकत्वं स्वयम् ऊढवान् । तद्गृहं प्रति केन गणेन गन्तव्यम् इति सर्वे सम्भूय समालोचनं कृतवन्तः । सर्वे निर्णीतवन्तः यत् - मायाविगणेन गन्तव्यम् इति । मायावी प्रथमं गन्तुं न इच्छति स्म । किन्तु नायकस्य वचनम् उल्लङ्घयितुम् अपि न शक्नोति स्म सः । अतः असमाधानेन एव ततः प्रस्थितः मायावी ।



मायाविगणः किञ्चिद्दूरं यदा गतः, तदा तेन हरितायमानानां गुल्मानां मध्यस्थं किञ्चन गृहं दृष्टम् । तत् गृहं सुन्दरतया निर्मितम् आसीत् । गृहं परितः रिक्तं स्थलम् आसीत् । गृहं परितः रक्षणार्थं वृकाः, सिंहाः इत्यादयः जन्तवः आसन् । किन्तु वस्तुतः ते न क्रूरजन्तवः, अपि तु मनुष्याः एव । सुकेशिनी मनुष्यैः सस्यानि खादयित्वा तान् क्रूरजन्तुरूपेण परिवर्तितवती आसीत् ।

ते क्रूरजन्तवः मायाविगणस्य जनानाम् उपरि आक्रमणं न कृतवन्तः । अपि तु शुनकाः इव पुच्छं चालयन्तः प्रीतिं प्रकटयन्तः तेषां समीपं गतवन्तः । किन्तु एतत् रहस्यं न जानन्ति स्म



आहूतवती । ग्रीक्जनाः मुग्धाः इव सुकेशिनीम् अनुसृतवन्तः । किन्तु मायावी सुकेशिन्याः दर्शनमात्रेण एव ज्ञातवान् यत् अत्र कापि वञ्चना अस्ति इति । अतः सः अन्तः न गतवान्, अपि तु बहिः एव स्थितवान् ।

सुकेशिनी आत्मानम् अनुसृत्य आगतेभ्यः रुचिकरम् आहारं पानीयं च दत्तवती । तस्मिन् आहारे सा काञ्चित् सस्यमूलिकां मिश्रीकृतवती आसीत् । अतः आहारस्य सेवनमात्रेण ग्रीक्जनाः सर्वं विस्मृतवन्तः । अनन्तरं सुकेशिनी मन्त्रदण्डेन सर्वान् स्पृष्टवती । अपरक्षणे एव सर्वे सूकररूपेण परिवृत्ताः अभवन् । तेषां शरीररूपं परिवृत्तं चेदपि मनस्स्थितिः यथापूर्वम् एव आसीत् । एवंप्रकारेण सुकेशिनी ग्रीक्जनान् सूकररूपेण परिवर्त्य एकस्मिन् प्रकोष्ठे स्थापितवती ।

ग्रीक्जनाः प्रकोष्ठे स्थित्वा सूकरैः खादितुं योग्यम् आहारं खादितवन्तः । गृहात् बहिः एव स्थितः मायावी अनुचराणाम् अनागमनेन दुःखितः सन् ततः नौकास्थानं प्रति गतवान् । रूपधरं दृष्ट्वा मायावी क्षणं यावत् मौनम् अश्रूणि स्रावितवान् ।

किञ्चित्कालानन्तरं मायावी आत्मनः दुःखं निगृह्य रूपधरं, तदीयान् अनुचरान् च उक्तवान् - ''वयं भवतः आज्ञानुसारं गुल्मप्रदेशं गतवन्तः । तत्र हरितायमान-प्रदेशे किञ्चन सुन्दरं गृहं दृष्टम् । गृहस्य

ग्रीक्सैनिकाः । तस्मात् ते क्रूरमृगान् दृष्ट्वा भीताः अभवन् ।

मायावी, तस्य सहायकाः च सुकेशिन्याः गृहात् बहिः स्थिते उद्याने एव स्थित्वा सर्वं सुसूक्ष्मं परिशीलितवन्तः । गृहस्य अन्तः तन्तुवयनं कुर्वत्याः कस्याश्चित् स्त्रियाः गानं श्रुतं तैः । तदा तेषु कश्चित् उक्तवान् - ''मित्राणि! अन्तः काचित् स्त्री सुमधुरं गायन्ती अस्ति । सा मनुष्यजातीया, देवता वा स्यात् । अन्तः गत्वा तया सह वार्तालापं करवाम । वृथा सन्देहः किमर्थम्?'' इति ।

अपरक्षणे एव सर्वे उच्चस्वरेण अन्तः स्थितां स्त्रियम् आहूतवन्तः । तदा सुकेशिनी बहिः आगत्य आगतान् अन्तः

अन्तः तन्तुभिः वयन्त्याः कस्याश्चित् स्त्रियाः सुमधुरं गानं श्रुतम् । गानं श्रुत्वा वयं ताम् आहूतवन्तः । सा गृहात् बहिः आगत्य अस्मान् अन्तः आहूतवती । मम गणीयाः सर्वे ताम् अनुसृतवन्तः । किन्तु अत्र कापि वञ्चना स्यात् इति सन्देहेन अहम् तस्याः गृहस्य अन्तः न गतवान्, अपि तु बहिः एव स्थितवान् । अन्तः गताः मम अनुचराः न प्रत्यागताः एव'' इति ।

रूपधरः एतां वार्तां श्रुत्वा अनुक्षणम् उत्थितवान् । बृहत्खड्गं धनुर्बाणादिकं च स्वीकृत्य मायाविनम् उद्दिश्य - 'आगच्छतु तावत्, तद्गृहं दर्शयतु' इति वदन् प्रस्थितवान् ।



तदा मायावी रूपधरं प्रार्थितवान् - ''प्रभो! कृपया मां मा आह्वयतु भवान् । भवन्तं नमस्करोमि अहम् । अहम् अत्रैव तिष्ठामि । यदि भवता सह अहम् आगच्छामि, तर्हि अहं सजीवं प्रत्यागमिष्यामि इति मम विश्वासः नास्ति । अस्माभिः निरातङ्कं जीवनीयं चेत् एतं प्रदेशं त्यक्त्वा गन्तव्यम् । इदानीम् एव इतः प्रस्थानं करवाम । कृपया मम वचनं शृणोतु भवान्'' इति ।

मायाविनः वचनं श्रुत्वा - ''भवतु । इतः निर्गमनविषये अनन्तरं चिन्तयाम । मायाविन् ! भवान् अत्रैव नौकास्थाने तिष्ठतु । मया तु गम्यते एव'' इति उक्त्वा रूपधरः ततः प्रस्थितवान् एव ।

रूपधरः हरितायमानं गुल्मप्रदेशं गत्वा बहिस्तात् एव सुकेशिन्याः गृहं परिशीलयन् आसीत् । तावता कश्चित् युवकः तस्य अभिमुखम् आगत्य - ''वीरश्रेष्ठ! कुत्र गच्छन् अस्ति भवान्? तत्र दृश्यमानं गृहं सुकेशिन्याः इति भवान् जानीयात् इति चिन्तयामि । भवदीयाः अनुचराः सर्वेऽपि तद्गृहे सूकररूपं प्राप्य बन्धिनः जाताः सन्ति । सुकेशिनी तान् सर्वान् सूकररूपेण परिवर्तितवती अस्ति । भवान् तत्र गच्छति चेत् भवन्तम् अपि सा सूकररूपेण परिवर्तयिष्यति । किन्तु चिन्तां मा करोतु भवान् । अहं काञ्चित् मूलिकां भवते दास्यामि । एतस्मात् तया दत्तस्य पानीयस्य पानेन अपि भवतः शरीरे विपरिणामः न भविष्यति । तदा सा स्पर्शेन भवन्तं



सूकररूपेण परिवर्तयितुं मन्त्रदण्डं भवतः समीपम् आनेष्यति । अनुक्षणं भवान् कोषतः खड्गं निष्कास्य तां मारयन् इव अभिनयं करोतु । तस्मात् सा भीता सती 'भवतः पत्नीत्वेन तिष्ठामि' इति भवन्तं वदिष्यति । तां पत्नीत्वेन भवान् अङ्गीकर्तुम् अर्हति । किन्तु भवता जागरूकेण भवितव्यम् । 'भवतः पीडां न करोमि' इति तस्याः सकाशात् वचनं स्वीकरोतु'' इति वदन् काञ्चित् मूलिकां रूपधराय दत्तवान् ।

तस्याः मूलिकायाः वर्णः हरित-मिश्रितकृष्णः आसीत् । तत्रत्यं पुष्पं श्वेतवर्णीयम् आसीत् ।

युवकः रूपधराय मूलिकां दत्त्वा ततः निर्गतवान् । अनन्तरं रूपधरः मन्दं मन्दं पदं स्थापयन् सुकेशिन्याः गृहसमीपं गत्वा ताम् उच्चस्वरेण आहूतवान् । तदा सुकेशिनी द्वारम् उद्घाट्य बहिः आगतवती, रूपधरम् अन्तः आहूतवती च ।

रूपधरः भयम् अनुभवन् एव ताम् अनुसृतवान् । सा रूपधरम् आसन्दे उपवेश्य औषधयुक्तं पानीयम् आनीय तस्मै दत्तवती । तया दत्तं पानीयं रूपधरः पीतवान् चेदपि युवकेन दत्तायाः मूलिकायाः प्रभावात् तस्मिन् कोऽपि विपरिणामः न जातः ।

सुकेशिनी एतं विषयं न जानाति । सा मन्त्रदण्डेन रूपधरं स्पृशन्ती उक्तवती - ''प्रकोष्ठं गत्वा भवतः अनुचरैः सह तिष्ठतु'' इति ।

अनुक्षणं रूपधरः कोषतः खड्गं निष्कास्य तस्याः उपरि आक्रमणं कृतवान् । तदा सुकेशिनी भयम् अनुभवन्ती उक्तवती - ''कः भवान्? कुतः आगतवान्? भवतः मातापितरौ कौ? औषधमिश्रितं पानीयं पीतं चेत् अपि भवति कोऽपि विपरिणामः न जातः इत्यतः ज्ञायते यत् भवान् सामान्यः न, अपि तु रूपधरः स्यात् इति । यतः देवताः माम् उक्तवत्यः सन्ति - 'रूपधरः भवतीं द्रष्टुम् आगमिष्यति' इति । इदानीम् आवयोः मध्ये द्वेषः मास्तु । खड्गं कोषे संस्थाप्य मां वृणोतु भवान् । आवां सुखेन जीवाव'' इति ।

"मम अनुचरान् सूकररूपेण परिवर्त्य तान् बन्धने स्थापितवतीं भवतीं परिणेतुं मम कथं वा इच्छा भवेत्? माम् अपि सूकररूपेण परिवर्तयितुं यत्नं कृतवती भवती । भवत्याः यत्नः न फलितः इत्यतः इदानीम् उपायेन मम स्नेहं सम्पादयितुम् इच्छन्ती भवती मां परिणेतुम् इच्छति । तथापि भवत्याः परिणये मम अङ्गीकारः अस्ति । किन्तु एकः नियमः - भवत्या कदापि अहं न पीडनीयः" इति उक्तवान् रूपधरः ।

रूपधरस्य वचनम् अङ्गीकृत्य सुकेशिनी दासीनां द्वारा रूपधरस्य अभ्यञ्जनस्नानं कारितवती । दास्यः रूपधराय, सुकेशिन्यै च भोजनव्यवस्थां कृतवत्यः । किन्तु रूपधरः भोजनं न कृतवान् । तदा सुकेशिनी उक्तवती - "किमर्थं सन्देहः भवतः? पुनः अहं वञ्चनां करोमि इति चिन्ता वा भवतः? 'वञ्चना न क्रियते मया' इति वचनं दत्तम् अस्ति किल!" इति ।

तदा रूपधरः उक्तवान् - "मम अनुचराः सूकररूपं प्राप्य महत् दुःखम् अनुभवन्तः सन्ति । तान् यथापूर्वं मनुष्यरूपेण भवती परिवर्तयति चेदेव अहम् आहारं स्वीकरिष्यामि । नो चेत् मम सन्तोषः नास्ति" इति ।

एतत् श्रुत्वा सुकेशिनी मन्त्रदण्डं स्वीकृत्य सूकररूपेण स्थितानां रूपधरस्य अनुचराणां समीपं गतवती, मन्त्रदण्डेन तान् स्पृष्टवती च । तदा ते यथापूर्वं मनुष्यरूपेण परिवर्तिताः अभवन् । सुकेशिनी रूपधरानुचरान् तेषां नायकसमीपम् आनीतवती । रूपधरं दृष्ट्वा तदीयाः अनुचराः अतीव सन्तुष्टाः ।

अनन्तरं सुकेशिनी रूपधरम् उद्दिश्य उक्तवती - "भवन्तः समुद्रतीरं गत्वा नौकातः सर्वाणि वस्तूनि निष्कास्य कस्याञ्चित् गुहायां रक्षन्तु । इतरान् अनुचरान् अपि अत्र आनयन्तु" इति ।

रूपधरः सुकेशिन्याः वचनम् अङ्गीकृतवान् । (अनुवर्तते)



# आधारदण्डः

विजयनगरस्य देवशर्मा कश्चित् सामान्यः गृहस्थः आसीत् । तस्य पत्नी कदाचित् 'वस्तूनि आनयतु' इत्युक्त्वा पतिं देवशर्माणं नगरं प्रति प्रेषितवती । देवशर्मा बहून् आपणान् गत्वा वस्तूनि क्रीतवान् । क्रीतानि वस्तूनि कर्मकरद्वारा वाहयित्वा सः गृहं प्रति प्रस्थितः । तदा तेन ज्ञातं यत् आत्मना आनीतः आधारदण्डः न दृश्यते इति ।

वस्तूनां क्रयणसमये कस्मिंश्चित् आपणे विस्मृत्य आधारदण्डः त्यक्तः स्यात् इति विचिन्त्य देवशर्मा आत्मना पूर्वं ये ये आपणाः गताः, तान् सर्वान् आपणान् गत्वा आधारदण्डविषये विचारितवान् । किन्तु कुत्रचित् अपि दण्डः न प्राप्तः तेन ।

एतस्मात् निराशः देवशर्मा ततः गृहं प्रति प्रस्थितः । तदा तेन पूर्वं गतः अन्यः कश्चित् आपणः दृष्टः । देवशर्मा तत्र गत्वा आपणिकं पृष्टवान् - ''मम आधारदण्डः अत्र अस्ति वा?'' इति ।

आपणिकः दण्डं देवशर्मणे यच्छन् - ''एषः एव खलु भवतः आधारदण्डः?'' इति पृष्टवान् ।

एतस्मात् अतीव सन्तुष्टः देवशर्मा - ''आम्! श्रीमन्! एषः मम एव आधारदण्डः । विजयनगरस्थेषु आपणिकेषु भवान् एव श्रेष्ठः । यतः मया बहुषु आपणेषु मदीयः आधारदण्डः अन्विष्टः । किन्तु ऋते भवन्तः, अन्यः कोऽपि आपणिकः न दत्तवान् मम दण्डम्'' इति उक्तवान् ।

देवशर्मणः एतत् वचनं श्रुत्वा सः आपणिकः आश्चर्यचकितः जातः ।





# जयदेवस्य विजयः

आरब्धे कार्ये असाफल्यं प्राप्नुवन् अपि त्रिविक्रमः पुनरपि वृक्षस्य समीपं गत्वा शवं स्कन्धे आरोप्य मौनं श्मशानाभिमुखं प्रस्थितवान् । तदा शवान्तर्गतः बेतालः अवदत् - ''राजन्! अस्मिन् मध्यरात्रसमये भवान् महान्तं परिश्रमं वहन् अस्ति इति यत् तेन अहं चिन्तयामि - 'भवान् महान् शक्तिमान्, सामर्थ्यवान् च' इति । भवादृशाः शक्तिमन्तः अपि कदाचित् असाफल्यं प्राप्य अपमानिताः भवन्ति । एतस्य कारणं प्रतिस्पर्धिनः शक्तिसामर्थ्यस्य अज्ञानं वार्धक्यं वा । भवतः अपि एतादृशी स्थितिः कदाचित् भवेत् । अतः भवता जागरूकेण भवितव्यम् इति स्मारयितुम् इच्छामि अहम् । एतस्य निदर्शनार्थं जयदेव-प्रतापरुद्रयोः कथां श्रावयामि । श्रद्धया शृणोतु तावत्'' इति ।

अनन्तरं बेतालेन कथा आरब्धा -

## बेतालकथा



जयदेवनामकः युवकः कल्याणपुरे वसति स्म । सः बाल्ये एव पण्डितानां सकाशात् श्रद्धया शास्त्र-साहित्यगानादीनाम् अध्ययनं कृतवान् आसीत् । निपुणानां योधानां सकाशात् शस्त्रयुद्धं गदायुद्धं च अभ्यस्तवान् आसीत् सः । एतस्मात् तस्य महान् गर्वः आसीत् ।

कदाचित् जयदेवस्य पिता पुत्रम् उक्तवान् - "विजयनगरस्थं प्रतापरुद्रं भवान् जानीयात् खलु! सः अपि सर्वविद्यासु सर्वशास्त्रेषु च अग्रगण्यः अस्ति" इति ।

एतत् श्रुत्वा जयदेवः प्रतापरुद्रेण सह स्पर्धितुम् इच्छन् विजयनगरं प्रति प्रस्थितः । मार्गे मल्लयोधः कश्चित् जयदेवेन मिलितः । सः जयदेवस्य आशयं ज्ञात्वा तम् उक्तवान् - "मया अपि एतावता चतुर्वारं मल्लयुद्धस्पर्धार्थं गतम् आसीत् । चतुर्वारम् अपि मया पराजयः प्राप्तः । तथापि केचन सूक्ष्मविचाराः मया ज्ञाताः सन्ति । अतः भवान् प्रथमं मया सह मल्लयुद्धं कृत्वा जयं सम्पाद्य प्रतापरुद्रस्य समीपं गच्छतु" इति ।

जयदेवः मल्लयोधेन सह मल्लयुद्धकरणम् अङ्गीकृतवान् । क्षणाभ्यन्तरे जयदेवः पराजितः जातः । तदा जयदेवः मल्लयोधसकाशात् कांश्चन सूक्ष्मविचारान् ज्ञातवान् । चतुर्णां दिनानाम् अनन्तरं सः मल्लयोधं जेतुं समर्थः जातः । तदा मल्लयोधः जयदेवं प्रशंसन् उक्तवान् - "भवान् अवश्यं प्रतापरुद्रं जेतुं शक्नोति" इति ।

चत्वारि दिनानि अतीतानि । जयदेवः प्रतापरुद्रं मल्लयुद्धार्थम् आहूतवान् । युद्धे जयदेवः पराजितः अभवत् । तदा प्रतापरुद्रः जयदेवम् उक्तवान् - "यद्यपि भवान् पराजितः, तथापि मल्लयुद्धस्य सूक्ष्मान् कांश्चन अंशान् ज्ञातवान् अस्ति । मम शिष्यत्वेन कानिचन दिनानि तिष्ठतु भवान्" इति ।

एतत् श्रुत्वा कुपितः जयदेवः - "भवान् अपि बह्वयः विद्याः जानाति । तासु कस्याश्चित् विद्यायां वा भवन्तं जित्वा एव भवतः शिष्यत्वेन स्थास्यामि अहम्" इति उक्त्वा ततः निर्गतवान् ।

विजयनगरे वीरसेननामकः कश्चित् योधः आसीत् । खड्गविद्यायां सः निपुणः आसीत् । तथापि सः प्रतापरुद्रेण सह कृते खड्गयुद्धे पराजयं प्राप्तवान् आसीत् । वार्धक्यकारणतः वीरसेनः चिन्तयन् आसीत् यत् - कस्मैचित् वीरयुवकाय खड्गविद्याशिक्षणं दत्त्वा तस्य द्वारा प्रतापरुद्रः जेतव्यः इति ।

तेषु एव दिनेषु सः जयदेवविषये श्रुतवान् । सः जयदेवम् आहूय खड्ग-विद्यपरीक्षाम् आयोजितवान् । जयदेवस्य खड्गविद्यानैपुण्यं दृष्ट्वा वीरसेनस्य समाधानं जातम् । तथापि कांश्चन मासान् यावत् खड्गविद्याविषये जयदेवाय विशेष-शिक्षणं दत्त्वा युद्धार्थं प्रतापरुद्रसमीपं प्रेषितवान् । प्रतापरुद्रः तु सुलभतया जयदेवं जितवान् ।

एतस्याः घटनातः खिन्नः जयदेवः चिन्तितवान् - 'अद्यपर्यन्तम् अपि अहम् आत्मानं महाशूरं चिन्तयन् आसम् । मदपेक्षया अपि शूराः वीराः च सन्ति अस्मिन् विजयनगरे । तादृशानां सकाशात् मल्लविद्यायां खड्गविद्यायां च विशेषशिक्षणं प्राप्य अपि प्रतापरुद्रं जेतुं न शक्तवान् अहम्' इति ।

अनन्तरदिनेषु जयदेवः प्रतापरुद्रेण सह गदायुद्धे धनुर्विद्यायां च स्पर्धित्वा पराजितः जातः । सः प्रतापरुद्रं प्रार्थितवान् - "भवतः सामर्थ्यं पूर्वं न ज्ञातवान् अहम् । कृपया मां शिष्यत्वेन स्वीकरोतु" इति ।

तदा प्रतापरुद्रः मन्दहासपूर्वकम् उक्तवान् - "भवान् महावीरः इत्यत्र नास्ति सन्देहः । अपि च भवन्तम् अवश्यं मम





शिष्यत्वेन स्वीकरिष्यामि अहम् । किन्तु एकः नियमः । पूर्वं भवता उक्तम् आसीत् यत् - कस्याञ्चित् विद्यायां वा जित्वा एव भवतः शिष्यत्वेन स्थास्यामि इति । तदनुसारम् एकस्यां विद्यायां वा भवता अहं जेतव्यः । तदा अहं भवन्तं शिष्यत्वेन स्वीकरिष्यामि'' इति ।

एतत् श्रुत्वा जयदेवः 'पुनरपि प्रतापरुद्रः प्रार्थनीयः' इति क्षणं चिन्तितवान् । किन्तु स्वाभिमानवशात् न प्रार्थितवान् सः । अपि तु सः निर्णीतवान् यत् - एकस्यां विद्यायां वा प्रतापरुद्रः जेतव्यः एव इति । किन्तु तत् असाध्यम् इति जानाति स्म जयदेवः । एतस्मात् अतीव दुःखितः जयदेवः आत्महत्यां कर्तुम् इच्छन् नगरसमीपस्थं नदीतीरं गतवान् ।

नदीतीरे कश्चित् संन्यासी उपविष्टवान् आसीत् । सः जयदेवं दुःखस्य कारणं पृष्टवान् । जयदेवः प्रवृत्तं सर्वं संन्यासिनं निवेदितवान् ।

तदा संन्यासी उक्तवान् - ''वत्स! भवतः मुखे दिव्यं तेजः दृश्यते । अतः भवान् वेदान्तस्य अध्ययनं करोतु । वेदान्तविषये भवन्तं जेतुं कोऽपि न शक्नोति । वेदान्ताध्ययनेन भवान् प्रतापरुद्रम् अपि जेतुं शक्नोति'' इति ।

संन्यासिनः वचनश्रवणात् जयदेवस्य उत्साहः प्रवृद्धः । संन्यासिनः वचनानुसारं षण्मासान् यावत् तस्य सकाशात् एव वेदान्तस्य अध्ययनं कृतवान् जयदेवः । अनन्तरं सः संन्यासिनम् उक्तवान् - ''स्वामिन्! वेदसागरः गभीरः अस्ति । अल्पं वेदज्ञानं प्राप्तवति मयि इदानीं ज्ञानोदयः जातः अस्ति । अतः इदानीं प्रतापरुद्रसमीपं गमनार्थं मह्यम् अनुमतिं ददातु भवान्'' इति ।

संन्यासी सन्तोषेण जयदेवम् आशिषा अनुगृहीतवान् । अनन्तरं जयदेवः नगरं प्रत्यागत्य प्रतापरुद्राय वार्तां प्रेषितवान् यत् भवत्सकाशम् आगच्छन् अस्मि इति ।

अत्रान्तरे जयदेवस्य वेदान्तज्ञानविषये प्रतापरुद्रः श्रुतवान् आसीत् । सः अपि जयदेवाय वार्तां प्रेषितवान् - ''भवतः सदा स्वागतम्'' इति ।

प्रतापरुद्रेण सह जयदेवः वेदान्तविषये

चर्चां करिष्यति इति वार्ता नगरजनैः ज्ञाता । एतं कार्यक्रमं द्रष्टुं पण्डिताः, पामराः, नागरिकाः सर्वे आगतवन्तः । प्रतापरुद्रेण बहुवारं जयदेवः पराजितः चेदपि जयदेवस्य तेजोमयं मुखं, गाम्भीर्यं च दृष्ट्वा जनाः आश्चर्यचकिताः । अपि च जनाः चिन्तयन्ति स्म - "जयदेवः प्रतापरुद्र-सदृशः वीरः न चेदपि तस्मिन् महत् नैपुण्यम् अस्ति । अतः कदाचित् सः विजयी भविष्यति एव" इति ।

निश्चिते समये सभा आरब्धा ।

आरम्भे प्रतापरुद्रः जयदेवम् उद्दिश्य - "भवान् मल्लयुद्धे, खड्गयुद्धे, गदायुद्धे, धनुर्विद्यायां, शास्त्रचर्चायां च मया सह स्पर्धित्वा पराजयं प्राप्तवान् अस्ति । इदानीं वेदान्तविषये भवता ज्ञातान् विचारान् मां वदतु भवान् । अहं यथाशक्ति भवता उक्तस्य व्याख्यानं करोमि । यदि मया सम्यक् व्याख्यानं क्रियते, तर्हि भवतः पराजयः । नो चेत् मम पराजयः । एतत् भवतः सम्मतं वा?" इति पृष्टवान् उत्साहेन ।

तदा जयदेवः मन्दहासपूर्वकम् उक्तवान् - "वेदान्तस्य अध्ययनात् अहं मां सम्यक् अवगतवान् अस्मि । मया ज्ञातम् अल्पम् । ज्ञातव्यं बहु अस्ति । भवतः अपेक्षया अपि अहम् एव अधिकं जानामि इति गर्वः नास्ति मम । मम अज्ञानम् अहङ्कारं च भवान् दृष्टवान् अस्ति । कृपया मां क्षाम्यतु । शिष्यत्वेन स्वीकरोतु ।



'गभीरस्य वेदान्तस्य विषये व्याख्यानं करोतु' इति कृपया मा वदतु माम्" इति ।

जयदेवस्य एतत् वचनं श्रुत्वा आश्चर्यचकितः प्रतापरुद्रः उक्तवान् - "मया बह्व्यः विद्याः ज्ञाताः सन्ति । अतिरथमहारथान् अपि जितवान् अस्मि अहम् । वेदान्तविचारः सामान्यः इति विचिन्त्य तम् अहम् उपेक्षितवान् आसम् । अतः मम अहम्भावः इतोऽपि न अपगतः । किन्तु वेदान्तशास्त्रस्य अध्ययनेन भवतः अहम्भावः अपगतः अस्ति । अतः एतद्विषये मया पराजयः प्राप्तः । अतः वेदान्तविषये भवान् मां शिष्यत्वेन अङ्गीकरोतु । अन्यविषयेषु अहं भवन्तं शिष्यत्वेन अङ्गीकरोमि" इति ।

वेतालः एवं कथां समाप्य अवदत् - ''अये राजन्! जयदेवस्य प्रतापरुद्रस्य च व्यवहारेण ज्ञायते यत् - तयोः वाक्चातुर्येण परस्परप्रशंसया च विषयः सङ्कीर्णः जातः अस्ति इति । अन्यः कोऽपि विशेषः न दृश्यते । लोके केचन पण्डिताः तार्किकाः इव केवलं वादं कुर्वन्ति, न तु सन्दर्भोचितं व्यवहरन्ति । जयदेव-प्रतापरुद्रयोः व्यवहारः अपि एवमेव भासते । सर्वप्रकारेण अपि प्रतापरुद्रः एव धीमान्, शक्तिमान्, सामर्थ्यवान् च इति तु सुस्पष्टम् । जयदेवस्य ज्ञानम् अत्यल्पम् । तथापि प्रतापरुद्रः जयदेवं प्रशंसितवान् - 'महाज्ञानी भवान् मया सह स्पर्धितुं योग्यः' इति । एतस्य कारणं जयदेवस्य वेदान्तज्ञानं प्रतापरुद्रेण सम्यक् न अवगतम् इति वा? अपि च तयोर्मध्ये कः श्रेष्ठः इति मया न ज्ञातम् । विजेता कः? जयदेवः उत प्रतापरुद्रः? एतेषां सन्देहानां समाधानं जानन् अपि यदि भवान् न वदेत्, तर्हि भवतः शिरः सहस्रधा भग्नं भवेत्'' इति ।

तदा मौनं स्थातुम् अशक्तः त्रिविक्रमः उक्तवान् - ''स्पर्धी महाज्ञानी चेत् एव सः प्रतिस्पर्धिनः पाण्डित्यम् अवगन्तुं शक्नोति । सकलविद्यापारङ्गतः प्रतापरुद्रः जयदेवस्य वेदान्तज्ञानं सम्यक् एव अवगतवान् अस्ति इति तु वास्तविकः विषयः । अहम् एव श्रेष्ठः इति यदा चिन्तनं भवति, तदा एव तस्य पराजयः भवति । प्रतिस्पर्धिनः पाण्डित्यस्य ज्ञानस्य च अङ्गीकरणेन स्पर्धी जयं प्राप्नोति । प्रतापरुद्र-जयदेवयोः ज्ञानोदयस्य कारणीभूतः अंशः वेदान्तसारः । यः वेदान्तविचारं जानाति सः स्पर्धितुं न इच्छति । वेदान्ती आत्मना ज्ञातान् विषयान् सर्वेभ्यः वितरति । अज्ञातान् विचारान् बुधजनसकाशात् प्राप्नोति । एतं वास्तविकविचारं जयदेवः प्रथमं ज्ञातवान् । अतः जयदेवस्य एव जयः'' इति ।

एवं राज्ञः मौनभङ्गः यदा जातः, तदा शवान्तर्गतः वेतालः ततः अदृश्यः भूत्वा यथापूर्वं वृक्षस्य शाखाम् अवलम्बितवान् ।





# काव्यसृष्टिः

अवन्तीदेशस्य राजा राज्यपरिपालने दक्षः आसीत् । तस्य आस्थाने प्रसिद्धाः विज्ञानिनः कवयः च आसन् ।

कदाचित् सभा प्रचलति स्म । तदा केचन शास्त्रज्ञाः आत्मना निरन्तरं परिश्रमेण कृतान् प्रयोगान् संशोधनानि च राजानं निवेदितवन्तः । एतस्मात् राजा सभासदः च अतीव सन्तुष्टाः ।

तस्मिन् समये कश्चित् कविः - 'शास्त्रज्ञानां यशसः कारणीभूतः राजा बृहस्पतिसदृशः' इति भावं मनसि निधाय पद्यमेकं श्रावितवान् ।

कवेः पद्यं श्रुतवतः राज्ञः मनसि कश्चन उपायः स्फुरितः । 'सर्वे अपि विज्ञानशास्त्रे कार्यप्रवृत्ताः सन्तः महत्कार्यं साधयेयुः इति विषयम् अधिकृत्य विज्ञानिभिः कविभिः च सम्भूय किञ्चन काव्यं रचनीयम्' इति विचिन्त्य राजा सभायां स्थितान् शास्त्रज्ञान् कवीन् च स्वचिन्तनं सूचितवान् ।

एतत् श्रुत्वा आश्चर्यचकितः मन्त्री राजानं किमपि वक्तुम् उद्युक्तः । किन्तु राजा एतत् न लक्षितवान् । अपि तु सभाकार्यक्रमं समाप्य ततः निर्गतवान् एव सः ।

मासः अतीतः । शास्त्रज्ञाः कवयः च आत्मना रचितस्य पद्यस्य पठनम् आरब्धवन्तः । किञ्चित्कालाभ्यन्तरे एव सभासत्सु मन्दस्वरेण सम्भाषणम् आरब्धम् । काव्यस्य गतिः व्यत्यस्ता जाता । नवरसानां स्थितिः युक्ते स्थाने न आसीत् । शृङ्गाररसस्थाने रौद्ररसः, शान्तरसस्थाने बीभत्सरसः, करुणरस-स्थाने हास्यरसः च आसन् । पद्यश्रवणम् असहमानः राजा आज्ञप्तवान् यत् - पद्यपठनं स्थगयन्तु इति । ततः सः सभां समाप्य गतवान् ।

तस्मिन् दिने सायङ्कालसमये राजा अन्तःपुरे उपविष्टवान् आसीत् । तदा तेन मेलितुं मन्त्री तत्र गतवान् । राजा मन्त्रिणं पृष्टवान् – "अस्माकम् आस्थाने प्रसिद्धाः शास्त्रज्ञाः कवयः च सन्ति । तादृशैः रसाभासयुक्तं पद्यं रचितम् । एतस्य कारणं किम्?" इति ।

तदा मन्त्री उक्तवान् – "महाराज! यस्मिन् दिने भवान् काव्यरचनार्थं कवीन् शास्त्रज्ञान् च आज्ञप्तवान्, तस्मिन् दिने एव एतद्विषये मम अभिप्रायं वक्तुम् इष्टवान् आसम् अहम् । किन्तु भवान् सभां समाप्य गतवान् एव । कृपया क्षन्तव्यः अहम् । एतद्विषये अहं किञ्चित् वक्तुम् इच्छामि । कवित्वम् अन्यत्, विज्ञानम् अन्यत् । कश्चित् कविः कलात्मकं काव्यं स्रष्टुं शक्नोति । किन्तु कवित्वलेशः अपि यस्मिन् नास्ति, तादृशः विज्ञानी काव्यं रचयितुं समर्थः न भवति । महाभारतं व्यासमहर्षिं विना यदि अन्यः लिखितवान् स्यात्, तर्हि तस्य रूपम् अन्यत् एव अभविष्यत् । महाकविः कालिदासः शाकुन्तलं यदि न लिखितवान् स्यात् तर्हि सारस्वतलोकः कीर्तिं न प्राप्स्यत् । किन्तु एतादृशानां महाकाव्यानां रचनं न तावत् सुलभं, सामान्यैः अशक्यम् अपि । एतस्य तात्पर्यं सामान्यजनैः रचितं काव्यम् एव न इति न । तादृशानि काव्यानि श्रेष्ठतराणि न भवन्ति । किन्तु खगोलशास्त्रं वराहमिहिरेण यदि न उक्तं स्यात्, अन्यस्य कस्यचित् द्वारा वा खगोलशास्त्रस्य परिचयः अभविष्यत् एव । कस्यचित् काव्यस्य परिपूर्णतायां कवेः असाधारणी सर्जनशक्तिः एव महत्त्वं पात्रं निर्वहति । विज्ञानरङ्गे तु समर्थाः शास्त्रज्ञाः सम्भूय कञ्चित् नूतनं विचारम् आविष्कर्तुम् अर्हन्ति । किन्तु काव्यं न सर्वैः सम्भूय सृज्यते" इति ।

मन्त्रिणः वचनश्रवणात् राजा ज्ञातवान् यत् स्वस्य आस्थाने कविभिः विज्ञानिभिः च सम्भूय रचिते काव्ये काव्यत्वं किमर्थं नास्ति इति ।



# ऐतिहासिकस्मृतयः

रचना - मीरा उग्रा, चित्राणि - अरित्रा

षोडशशतकस्य आरम्भे युरोपुजनाः अस्माकं देशम् आगतवन्तः । तदा आगताः ते उद्यमम् आरब्धवन्तः, तेषां रक्षणार्थं दुर्गाणि निर्मितवन्तः च ।

मद्रास्नगरस्थं सैण्ट् जार्ज् दुर्गं १६४०-१६५४ वर्षयोः मध्यकाले निर्मितम् । 'कुवं' नदी वङ्गाल-उपसागरं यत्र प्राप्नोति, तत्र एतत् दुर्गं निर्मितम् अस्ति । एवम् एतस्य दुर्गस्य पार्श्वद्वये अपि सहजा जलरक्षणव्यवस्था अस्ति । दुर्गस्य तृतीये पार्श्वे परिखा निर्मिता अस्ति ।

मोगलजनाः, फ्रेञ्चजनाः, मराठीजनाः च बहुवारम् एतस्य दुर्गस्य उपरि आक्रमणं कृतवन्तः आसन् । १७५८ तमे वर्षे फ्रेञ्चसैनिकाः तिसृभ्यः दिग्भ्यः अपि दुर्गस्य उपरि आक्रमणं कृत्वा मासद्वयं यावत् रक्षकभटान् पीडितवन्तः । अनन्तरं ब्रिटिष्जनैः वङ्गालतः साहाय्यं यदा प्राप्तं तदा फ्रेञ्चसैनिकाः ५२ अग्न्यस्त्राणि, व्रणितान् सैनिकान् च तत्रैव परित्यज्य ततः पलायिताः ।

एतस्याः घटनातः जागरिताः ब्रिटिष्जनाः एतत् दुर्गम् ऊल्विच्-गणित-शास्त्रज्ञस्य बार्तोलोम्युराबिन्-वर्यस्य साहाय्येन सुरक्षिततया पुनर्निर्मितवन्तः । दशवर्षाणाम् अनन्तरं हैदर्अली मैसूरतः मद्रास्नगरं गत्वा अत्र सैन्यं पर्यपालयत् ।



प्रथमं राजकीयं व्यङ्ग्यचित्रम्



सैण्ट् जार्ज् दुर्गम् - मद्रास्



विलियंदुर्गस्य गोपुरम्

१७६९ तमवर्षस्य एप्रिल् ४ दिनाङ्के द्वयोर्मध्ये जातस्य सन्धेः निबन्धनानि स्वयं विहितवान् हैदर्‌आलीवर्यः । ततः प्रतिगमनसमये मार्जयितुम् अशक्यं व्यङ्ग्यचित्रम् एकं दुर्गभित्तौ लेखितवान् सः । कस्यचित् नासिकाग्रहणपूर्वकम् आकर्षणम् अस्मिन् चित्रे चित्रितम् अस्ति । आधुनिककाले विदेशे चापि व्यङ्ग्यचित्रकलायाः अभिवृद्धितः पूर्वम् एव चित्रितं प्रथमं राजकीयव्यङ्ग्यचित्रम् एतत् ।

एतस्य दुर्गस्य अन्तः विद्यमानं सैण्ट् मेरीक्रैस्तमन्दिरम् आंग्लजनानां प्रथमं मन्दिरम् । १६७८ तमे वर्षे निर्मितस्य एतस्य पुनर्निर्माणं १७५८ तमे वर्षे जातम् ।

सम्प्रति एतस्य दुर्गस्य आवरणे एव तमिळुनाडुशासकाङ्गसभाभवनं, राज्यसर्वकारस्य प्रधानकार्यालयः च अस्ति ।

ईस्ट् इण्डिया कम्पेनिजनः शस्त्रवैद्यः गेब्रियल् बौटन्‌वर्यः राजकुमार्याः जहनारायाः शरीरस्थानि दग्धचिह्नानि स्वकीयवैद्यकीयनैपुण्येन निवारितवान् । एतस्मात् सन्तुष्टः जहनारायाः पिता शाहजहान्‌वर्यः प्रत्युपकाररूपेण बङ्गालदेशे निरातङ्कं वाणिज्यकरणार्थं ईस्ट् इण्डिया संस्थायै अनुमतिं दत्तवान् । १६४४ तमे वर्षे एतत् प्रवृत्तम् । केषाञ्चित् वर्षाणाम् अनन्तरं सः एव गेब्रियल्‌नामकः वैद्यः बङ्गालदेशस्य राजप्रतिनिधेः युवराजस्य षुजावर्यस्य कुटुम्बसदस्यायाः कस्याश्चित् महिलायाः चिकित्सां कृतवान् । एतस्य उपायनरूपेण कलकत्तासमीपे दुर्गनिर्माणार्थम् अनुमतिः प्राप्ता तेन । कलकत्तानगरस्थस्य विलियंदुर्गस्य निर्माणार्थम् एकादश वर्षाणि आवश्यकानि अभवन् । १७०७ तमे वर्षे दुर्गनिर्माणकार्यं समाप्तम् ।

बङ्गालदेशस्य व्यवहारेषु दिने दिने ईस्ट् इण्डिया संस्थायाः कार्यक्रमाः अपि अन्तर्गताः भवन्ति स्म इति यत् तत् युवराजस्य सिराजुद्दौलस्य इष्टाय न जातम् । अतः सः आज्ञां कृतवान् यत् - अधिकारिभिः अनुमतिं विना विलियंदुर्गस्य दृढीकरणं, दुर्गभित्तौ अग्न्यस्त्रस्य योजनं वा न करणीयम् इति । एतेन ज्वलति अग्नौ तैलयोजनम् इव जातम् । अतः कुपिताः आंग्लाः सिंहासनप्राप्त्यर्थं सिराज्प्रतिस्पर्धिना साहाय्यं कृतवन्तः ।



विलियंदुर्गं, कलकत्ता



सिराजुद्दौलः

तस्मात् तस्य पितामहस्य अनन्तरकाले सिंहासनारूढेन सिराजुद्दौलवर्येण प्रथमं कृतं कार्यं नाम १७५६ तमवर्षस्य एप्रिल्मासे विलियंदुर्गस्य उपरि युद्धप्रकटनम् ।

सिराजुद्दौलवर्यस्य सैन्यं यदा दुर्गसमीपं गतं, तदा एव राज्यपालः ड्रेक्वर्यः, इतरे उन्नताधिकारिणः च दुर्गतः पलायनं कृत्वा नौकासु निलीय स्थितवन्तः । रक्षकरहितं विलियंदुर्गं १७५६ तमवर्षस्य जून्मासस्य २० दिनाङ्के सिराजुद्दौलेन स्वायत्तीकृतम् । १४६ जनाः सिराजुद्दौलस्य अधीनाः अभवन् । तान् सर्वान् एकस्मिन् लघुप्रकोष्ठे स्थापितवान् सिराजुद्दौलः । अनन्तरदिने प्रातःकालाभ्यन्तरे २३ जनाः जीवन्ति स्म । इतरे मृताः आसन् । एषा दुर्घटना यत्र प्रवृत्ता, सः प्रकोष्ठः 'ब्लाक् होल् आफ् कलकत्ता' इति उच्यते । सिराजुद्दौलस्य एतं व्यवहारं ब्रिटिष्जनाः सार्वजनिकाः च खण्डितवन्तः । तथापि आधुनिकानाम् इतिहासकाराणाम् अभिप्रायः आसीत् यत् - एतस्याः दुर्घटनायाः साक्षात् कारणीभूतः सिराजुद्दौलः न इति ।



ईस्ट् इण्डिया संस्थायाः अधिकारिणा सह मोगल्चक्रवर्ती षा अलंवर्यः

इतरे केचन प्रकोष्ठे स्थितानां बन्धिनां संख्याविषये मृतानां संख्याविषये च सन्देहं प्रकटितवन्तः ।

एकवर्षानन्तरं प्लासीयुद्धं प्रवृत्तम् । १७५६ तमवर्षस्य अगस्ट्मासस्य १७ दिनाङ्के मोगलचक्रवर्ती द्वितीय-षा-अलंवर्यः यं शासननियमं कृतवान्, तदनुगुणं बङ्गाल्, बिहार, ओरिस्सा इत्येतेषु प्रदेशेषु करसङ्ग्रहाधिकारः ईस्ट्इण्डियासंस्थायाः अधीनः जातः ।

विलियंदुर्गस्य वैशाल्यवैशिष्ट्यादिकं परिशील्य राबर्ट् क्लैव्वर्यः एवम् उक्तवान् अस्ति - ''समग्रः भारतदेशः सम्भूय एतद्विरुद्धं युद्धं करोति चेदपि एतत् दुर्गम् अजेयम् एव स्थास्यति'' इति ।



राबर्ट् क्लैव्

सम्प्रति विलियंदुर्गं भारतीयसैन्यशाखायाः अधीने अस्ति । गङ्गा-महानन्दयोः सङ्गमस्थाने ११९८ तमे वर्षे गौरदुर्गं निर्मितम् । एतत् दुर्गं बङ्गालदेशस्य प्राचीनतमं दुर्गम् अस्ति । शिशुपाल्, बराबति, नौगाङ्बोडा, श्यांनगर्, साराघड् इत्यादीनि उत्तरभारतस्थानि दुर्गाणि प्रसिद्धिं प्राप्तवन्ति सन्ति । दक्षिणभारतीयानि बादामि, दिण्डिगल्, तिरुचिनापल्लि, टेलिचेरी इत्यादीनि दुर्गाणि अपि प्रसिद्धानि ।

पश्चिमभारतस्थानि नाभा, हरिपर्वतदुर्गं, काङ्ग्रादुर्गाणि, मध्यभारतदेशीयानि झान्सी, छन्देरी, बहरन्पुरदुर्गाणि इतिहासे प्रमुखं स्थानं प्राप्तवन्ति सन्ति ।

१. कालिबङ्गन्
२. डिल्ली
३. अम्बर्
४. भरतपुर्
५. आग्रा
६. ग्वालियर्
७. रणथम्बोर्
८. चित्तोर्
९. कुम्भलघड
१०. जोधपुरम्
११. जैसाल्मेर्
१२. बिकनेर्
१३. माण्डू
१४. दौलताबाद्
१५. अहमद्नगर्
१६. सिंहघड
१७. शिवनर्
१८. रायघड
१९. जञ्जीरा
२०. सुवर्णदुर्गम्
२१. राजगड
२२. बीदर्
२३. गुल्बर्गा
२४. बिजापुर्
२५. गोल्कोण्ड
२६. वरङ्गल्
२७. श्रीरङ्गपत्तनम्
२८. जिञ्जी
२९. वेल्लूरु
३०. मद्रास्
३१. विलियंदुर्गम्
३२. रोहतासघड
३३. अलहाबाद्
३४. चुनार्घड
३५. कालिञ्जर्




अस्माकं देशे १४०० अपेक्षया अपि अधिकानि दुर्गाणि सन्ति । महाराष्ट्रे ६५६ दुर्गाणि, मध्यप्रदेशे ३३० दुर्गाणि, राजस्थाने २५० दुर्गाणि च सन्ति । बहूनि दुर्गाणि शोचनीयावस्थायां सन्ति । क्वचित् भित्तयः पतिताः सन्ति । पुनः क्वचित् शिलाविग्रहाः चोरैः अपहृताः सन्ति । अन्यत्र क्वचित् दुर्गसोपानानि छिन्नानि जातानि सन्ति । एवम् बहूनि दुर्गाणि विनाशजनकानि जातानि सन्ति ।

एतेषां दुर्गाणां रक्षणदायित्वम् अस्माकं सर्वेषां कर्तव्यम् अस्ति ।



# शपथपूर्वकं कथनम्

असत्यकथने कनकराजस्य महती प्रीतिः । अतः कोऽपि तस्य वचने न विश्वसिति स्म । तदारभ्य सः किमपि वक्तव्यं चेदपि शपथपूर्वकम् एव वदति स्म ।

कदाचित् कनकराजः पार्श्वस्थं गृहं गच्छन् आसीत् । तस्मिन् समये काचित् वृद्धा पौत्रं कथां वदन्ती - 'रामनाथः घृतरहितकोशातकी च--' इति उक्तवती ।

तदा पौत्रः पृष्टवान् - "घृतरहितस्य कोशातकी इत्युक्ते किम्?" इति ।

"घृतरहितकोशातक्यां घृतं यथा न भवति, तथैव रामनाथे रामलक्षणानि एव न आसन्" इति पौत्रस्य सन्देहं निवारितवती वृद्धा ।

एतत् श्रुत्वा कनकराजः वृद्धायाः समीपं गत्वा - "अम्ब! ह्यः एव अस्माकं गृहे घृतं समाप्तम् अभवत् । अतः वाटिकातः काश्चन कोशातकीः आनीय ताः निष्पीड्य घृतं निष्कासितवान् अस्मि । किन्तु भवती कोषातक्यां घृतम् एव न भवति इति वदन्ती अस्ति किल!" इति पृष्टवान् ।

"भवान् असत्यं वदति । कोशातक्यां घृतं न भवति एव" उक्तवती वृद्धा ।

"अम्ब! सत्यम् एव वदन् अस्मि अहम् । भवत्याः नाम्ना शपे" इति उक्त्वा ततः निर्गतवान् कनकराजः ।

तस्यां रात्रौ सा वृद्धा ज्वरेण कम्पमाना ज्येष्ठपुत्रं रमणम् उक्तवती - "कनकराजः शपथपूर्वकम् असत्यम् उक्तवान् अस्ति । अतः एव अहं ज्वरेण पीडिता अस्मि" इति ।

अनन्तरदिने रमणः कनकराजस्य गृहं गतवान् । कनकराजः गृहे न आसीत् । तद्गृहस्य पुरतः अन्यः अपि कश्चित् कनकराजम् एव प्रतीक्षमाणः आसीत् ।

'अनामिका'



तस्य नाम सोमनाथः । कदाचित् सोमनाथ-कनकराजयोः मध्ये श्वेतकाकाः न भवन्ति इति विषये वादः प्रवृत्तः आसीत् । श्वेतकाकाः सन्ति इति सोमनाथस्य वादः । किन्तु कनकराजः वदति स्म यत् श्वेतकाकाः न सन्ति इति । 'यदि श्वेतकाकः दृष्टिगोचरः भवति तर्हि सः काकः गृहीत्वा आनेतव्यः । यः प्रथमं श्वेतकाकम् आनेष्यति तस्मै द्वितीयेन शतं रूप्यकाणि दातव्यानि' इति तयोः मध्ये स्पर्धा जाता आसीत् ।

सोमनाथेन दिनद्वयात् पूर्वं कश्चित् काकशावकः दृष्टः । सः कनकराजसमीपं गत्वा श्वेतकाकं दर्शितवान् ।

एतत् दृष्ट्वा कनकराजः हसन् - "भवतः अपेक्षया पूर्वम् एव मया श्वेतकाकाः दृष्टाः आसन् । किन्तु तेषां सर्वेषाम् अपि अहं कृष्णवर्णं लेपितवान् अस्मि । एषः काकः कथमपि आत्मानं रक्षन् पलायितः । अतः एतं काकं ददातु । एतस्य अपि वर्णलेपनं करिष्यामि अहम्" इति उक्तवान् ।

"असत्यं कथयति भवान्" इति उक्तवान् सोमनाथः ।

"भवतः नाम्ना अहं शपे । मम वचनं सत्यम्" इति उक्तवान् कनकराजः ।

अनन्यगतिकः सोमनाथः कनकराजं निन्दन् ततः गतवान्, मध्येमार्गं कस्मिंश्चित् कूपे पतितवान् च । पतितं तम् अकस्मात् कोऽपि दृष्टवान्, रक्षितवान् च । अन्यथा सोमनाथः मृतः अभविष्यत् । एतां घटनां मनसि निधाय स्वनाम्ना शपथं कृतवन्तं कनकराजं 'भवान् मां क्षमां प्रार्थयतु' इति वक्तुं तस्य गृहम् आगतवान् आसीत् सोमनाथः ।

तावता रामराजनामकः अन्यः कश्चित् तत्र आगतवान् । सः गणेशमन्दिर-समीपनिवासिनीं सीतां परिणेतुम् इष्टवान् आसीत् ।

एतं विषयं ज्ञात्वा कनकराजः रामराजम् उक्तवान् आसीत् - "सीतायाः नासिका अतीव लघ्वी अस्ति । अतः सा कथं भवतः अनुरूपा स्यात्?" इति ।

"लघ्वी नासिका यस्याः अस्ति, सा एव मम प्रियतमा" इति उक्तवान् रामराजः ।

एतदनन्तरं कनकराजः सीतया मिलित्वा उक्तवान् - ''भवत्याः पितुः सकाशे प्रभूतं धनम् अस्ति इति कारणतः सः भवतीं परिणेतुम् इष्टवान्, न तु भवत्या विषयिण्या प्रीत्या'' इति ।

सीतायाः पितुः द्वारा एतं विषयं ज्ञात्वा रामराजः कनकराजस्य समीपं गत्वा उक्तवान् - ''भवान् सीताम् असत्यम् उक्त्वा तस्याः मनसि कालुष्यं पूरितवान् । इदानीं भवता एव तस्यां मद्विषये उत्तमा भावना उत्पादनीया'' इति ।

तदा कनकराजः - ''एतद्विषये अहं किमपि न जानामि इति भवतः नाम्ना शपे'' इति उक्तवान् ।



एतस्याः घटनायाः अनन्तरं रामराजः महतः आतपस्य औष्ण्यकारणात् मूर्च्छां गतः । तदा सीता तस्य शुश्रूषां कृतवती । किञ्चित्कालानन्तरं सचेतनः रामराजः प्रवृत्तं सर्वं सीतां निवेदितवान् । एतस्मात् उभयोः अपि सन्देहाः परिहृताः अभवन् । एतां घटनां परिलक्ष्य रामराजः कनकराजं - 'भवान् मम क्षमायाचनं करोतु' इति वक्तुम् आगतवान् आसीत् ।

अत्रान्तरे गणपतिनामकः अन्यः कश्चित् तत्र आगतवान् । तदीया विशाला आम्रवाटिका आसीत् । तस्याः वाटिकातः फलानि चोरयन्तं चोरं कनकराजः दृष्टवान् आसीत् । तस्य चोरस्य नाम शङ्करः इति कनकराजः गणपतिम् उक्तवान् आसीत् । शङ्करः गौरववान् पुरुषः । किन्तु अतीव दरिद्रः । चोरितानि फलानि शङ्करस्य गृहे आसन् । एतत् दृष्ट्वा गणपतिः शङ्करात् तानि फलानि प्रतिस्वीकृत्य तं सम्यक् ताडयित्वा प्रेषितवान् ।

अत्रान्तरे गणपतेः वाटिकापालकः शङ्करसमीपं गत्वा - ''मम स्वामिनः पुत्रेण उक्तम् इत्यतः शतं फलानि उत्पाटितानि मया । मध्ये अकस्मात् अन्यत् कार्यम् आपतितम् । तदा मम समस्यां कनकराजं निवेदितवान् अहम् । तदा कनकराजः उक्तवान् - 'तानि फलानि शङ्करस्य गृहे स्थापयतु' इति । तस्मिन् समये भवतः गृहे कोऽपि न आसीत् । किन्तु मुख्यद्वारम् उद्घाटितम् एव आसीत् । तदा अहं फलानि भवतः गृहे संस्थाप्य विषयं कनकराजं



सुदीर्घः कालः अतीतः चेदपि कनकराजः न प्रत्यागतः एव । अतः "ग्रामाधिकारिणः समीपं गत्वा कनकराजविषये आरोपं करवाम" इति विचिन्त्य सर्वे ग्रामाधिकारिणः समीपं गतवन्तः । तस्मिन् एव समये तद्देशस्य राजा मन्त्रिणा सह तत्र आगतवान् आसीत् ।

कनकराजविषयकम् आरोपं श्रुत्वा राजा तान् पृष्टवान् - "कनकराजः असत्य-कथयिता इति जानन्तः अपि भवन्तः किमर्थं तस्य वचने विश्वसन्ति?" इति ।

तदा ग्रामाधिकारी महाराजं सविनयम् उक्तवान् - "महाराज! अविश्वास-विश्वासयोः चर्चा मास्तु इदानीम् । अन्यस्य नाम्ना शपथकरणं नाम मारणसमानम् । अतः कनकराजाय योग्यं दण्डनं दातव्यम्" इति ।

राजा भटानां द्वारा कनकराजम् आनाय्य उक्तवान् - "गणपति-रामराजादीनां क्षमां प्रार्थयतु" इति ।

अनुक्षणं कनकराजः उक्तवान् - "एते सर्वे मम विषये किमपि कुतन्त्रम् आचरन्तः सन्ति । वस्तुतः अहं किमपि न जानामि इति भवतः नाम्ना शपे" इति ।

अपरक्षणे एव महाराजस्य उदरवेदना आरब्धा । एतस्मात् कुपितः सः उक्तवान्- "एतस्मिन् दयाप्रदर्शनं न युक्तम् । एतस्मै मरणदण्डनं यच्छन्तु" इति ।

सूचितवान् आसम् । एषा वास्तविकी स्थितिः" इति उक्तवान् ।

एतत् ज्ञात्वा गणपतिः कनकराजम् आनायितवान् । कनकराजः आगत्य प्रवृत्तं ज्ञात्वा गणपतिम् उक्तवान् - "शङ्करविषये भवतः पूर्वतनद्वेषः आसीत् इति मन्ये । अतः तं ताडितवान् भवान् । शङ्करः चोरः इति मया न उक्तम् इति भवतः नाम्ना शपथपूर्वकं वदामि" इति ।

तस्मिन् सायङ्काले स्नानार्थं नदीं गतः गणपतिः आवर्ते पतितः । कथमपि प्राणान् रक्षन् गृहं प्रत्यागतवान् आसीत् सः । एतया घटनया खिन्नः गणपतिः कनकराजं - 'मां क्षमां प्रार्थयतु' इति वक्तुम् आगतवान् आसीत् ।

तदा मन्त्री उक्तवान् - ''महाप्रभो! एषः दोषं कृतवान् स्यात् नाम । किन्तु मरणदण्डनदानं न उचितम्'' इति ।

''किमर्थम्?'' इति आश्चर्येण पृष्टवान् राजा । तदा मन्त्री राजानम् उक्तवान् - ''प्रभो! राजकीयविषये सर्वं जानाति एव भवान् । सम्प्रति प्रतिवेशिराज्यस्य राजा अस्माकम् उपरि आक्रमणार्थं युद्धसन्नाहं कुर्वन् अस्ति इति वार्ता गुप्तचराणां द्वारा ज्ञाता अस्ति अस्माभिः । युद्धं भवति चेत् जयः तु अस्माकम् एव । किन्तु कनकराजे सति सैन्यस्य परिश्रमः एव न आवश्यकः । तस्य द्वारा पार्श्वराज्यस्य सर्वेषां सैनिकानां नाम्ना अपि शपथं कारयाम'' इति ।

एतत् श्रुत्वा कुपितः राजा उक्तवान् - ''मन्त्रेण शपथेन वा यदि सर्वं सिध्येत्, अन्धश्रद्धया एव देशः जेतुं शक्यः चेत्, आयुधानां का आवश्यकता? सैनिकानां परिश्रमः कुतः?'' इति पृष्टवान् ।

तदा मन्त्री मन्दहासपूर्वकम् उक्तवान् - ''अन्धश्रद्धायाम् अविश्वासं येन प्रकट्यते तेनैव भवता कनकराजाय मरणदण्डनम् अपि विधीयते । एषा अपि अन्धश्रद्धा एव खलु!'' इति ।

''आम्! सत्यं खलु! कथम् अद्य मया अपि अन्धश्रद्धायां विश्वासः प्रकटितः अभवत्'' इति उक्तवान् राजा ।

तदा मन्त्री उक्तवान् - ''महाप्रभो! अत्र भवतः दोषः नास्ति । मनुष्यमात्रस्य स्वभावः एषः । अतः अन्धश्रद्धाविषये न्यायविचारणम् एव न युक्तम् । असत्य-कथनं सामाजिकी समस्या । तां समस्यां तद्ग्रामीणाः एव स्वयं परिहरेयुः । अतः भवान् कनकराजं मोचयतु इतः'' इति ।

राजा मन्त्रिणः वचनम् अङ्गीकृत्य कनकराजम् उक्तवान् - ''भवान् गन्तुम् अर्हति । किन्तु पूर्ववत् असत्यं कथयन् मा जीवतु'' इति ।

एतत् श्रुत्वा कनकराजः महाराजं सविनयं नमस्कृत्य - ''महाराज! अवश्यं भवतः वचनं पालयिष्यामि'' इति उक्त्वा ततः गतवान् ।





# अनुभविनः आवश्यकता

रामनाथः गोविन्दः च स्नेहितौ । तौ कदाचित् राजवीथ्यां पादरक्षापणम् आरब्धवन्तौ ।

कदाचित् रामनाथः गोविन्दम् उक्तवान् - "आपणे आवयोः सहायकत्वेन कश्चित् कर्मकरः आवश्यकः । अतः रङ्गनाथनामकः कश्चित् बालकः मया उक्तः अस्ति - श्वः आरभ्य कार्यार्थम् आगच्छतु इति । 'द्विशतं रूप्यकाणि वेतनं दास्यामि' इत्यपि तम् उक्तवान् अस्मि अहम्" इति ।

तदा गोविन्दः उक्तवान् - "एवं वा? मया अपि गोपालनामकः कश्चित् बालकः उक्तः अस्ति । गोपालः अतीव बुद्धिमान् अनुभवी च । अतः तस्मै त्रिशतरूप्यकाणां वेतनं निश्चितवान् अस्मि अहम्" इति ।

"आवां परस्परम् अनुक्त्वा कर्मकरं नियोजितवन्तौ स्वः । किन्तु द्वयोः आवश्यकता तु अत्र नास्ति । द्विशतस्य रूप्यकाणां वेतनत्वेन कार्यं कर्तुम् अङ्गीकृतवन्तं रङ्गनाथम् एव आपण-कार्यार्थं स्वीकरवाव । रङ्गनाथस्य यद्यपि अनुभवः नास्ति, तथापि सकृत् उक्तं गृह्णाति सः । अस्माकम् आपणं प्रति ये ग्राहकाः आगच्छन्ति, तेभ्यः पादरक्षाः दर्शयितुं, तैः क्रीताः पादरक्षाः सुन्दरतया बन्धुं च महती बुद्धिमत्ता न अपेक्षिता । भवता सूचितः गोपालः श्वः आगमिष्यति चेत् तम् उपायेन अहं प्रतिप्रेषयिष्यामि । तद्विषये चिन्ता मास्तु भवतः" इति उक्तवान् रामनाथः ।

एतत् श्रुत्वा गोविन्दः उक्तवान् - "गोपालः स्वीक्रियते चेत् शतं रूप्यकाणि अधिकं दातव्यानि भवन्ति इति कारणतः गोपालस्य प्रतिप्रेषणं न उचितम् । मासं यावत् उभयोः कार्यं परिशील्य यः चतुरः अस्ति, तं स्वीकरवाव" इति ।

'श्रीमाता'



रामनाथः गोविन्दस्य वचनम् अङ्गीकृतवान् । अनन्तरदिने गोपालः रङ्गनाथः च कार्यार्थम् आगतवन्तौ ।

कदाचित् वयसा ज्येष्ठः कश्चित् धनिकः रामनाथस्य पादरक्षापणम् आगतवान्, पादरक्षां क्रीतवान् च । पादरक्षायाः मूल्यं षष्टिः रूप्यकाणि । किन्तु धनिकस्य समीपे तावत् धनं न आसीत् ।

तदा धनिकः आपणिकं रामनाथम् उक्तवान् - ''मत्सकाशे पर्याप्तमात्रं धनं नास्ति इदानीम् । मम समीपे विद्यमानानि चत्वारिंशत् रूप्यकाणि भवते दास्यामि । अवशिष्टं धनं गृहं गत्वा कर्मकरद्वारा प्रेषयिष्यामि । पादरक्षां सम्यक् कागदेन बद्ध्वा अश्वशकटे स्थापयतु'' इति ।

एतत् श्रुत्वा रामनाथस्य चिन्ता आरब्धा । यतः आगतस्य धनिकस्य परिचयः न आसीत् तस्य । विंशति-रूप्यकाणाम् ऋणं दीयते चेत् ततः धनं प्रत्यागच्छति इत्यत्र विश्वासः नास्ति ।

आपणिकस्य रामनाथस्य एतं भावम् अवगत्य गोपालः सङ्केतेन तं सूचितवान् - 'चिन्ता मास्तु भवतः' इति ।

तदा रामनाथः धनिकम् उद्दिश्य उक्तवान् - ''स्वामिन्! विंशतिरूप्यकाणां दानविषये चिन्ता मास्तु भवतः । पुनः कदाचित् ददातु धनम्'' इति ।

अनन्तरं गोपालः धनिकम् उक्तवान् - ''स्वामिन्! भवान् शकटे उपविशतु । अहम् इदानीम् एव पादरक्षाबन्धम् आनीय भवतः शकटे स्थापयिष्यामि'' इति ।

धनिकः चत्वारिंशत् रूप्यकाणि आपणिकाय दत्त्वा बहिः गत्वा शकटे उपविष्टवान् । अनन्तरं गोपालः पादरक्षां सुन्दरतया बद्ध्वा धनिकस्य शकटे स्थापितवान् ।

धनिकस्य निर्गमनानन्तरं रामनाथः गोपालं पृष्टवान् - ''सः धनिकः कः? किं भवान् तं जानाति?'' इति ।

''न'' इति उक्तवान् गोपालः ।

एतत् श्रुत्वा कुपितः रामनाथः उक्तवान् - ''तम् अजानन् अपि भवान् किमर्थं मां सङ्केतेन सूचितवान् यत् 'चिन्ता मास्तु' इति? भवतः वचने विश्वस्य तस्मै

ऋणं दत्तं मया'' इति ।

तावता कस्यापि कार्यस्य निमित्तं बहिः गतः गोविन्दः तत्र आगतवान् । वस्तुस्थितिं ज्ञात्वा सः कोपेन गोपालं पृष्टवान् - ''धनिकस्य पूर्वापरम् अज्ञात्वा अपि जानामि इव किमर्थं सङ्केतेन सूचितवान् भवान् । एवं तर्हि अत्र कर्मकरत्वेन नियुक्तेः कः उद्देशः भवतः?'' इति ।

तदा गोपालः सविनयम् उक्तवान् - ''श्रीमन्! धनं न प्रत्यागच्छेत् इति भीतिः सर्वथा मास्तु भवतः । धनम् अवश्यं प्रत्यागमिष्यति । यतः मया तस्मै दत्तं पादरक्षाद्वयम् अपि एकस्य एव पादस्य । अतः सः अस्मान् सुलभतया वञ्चयितुं न शक्नोति । पादरक्षायाः परिवर्तनार्थं तेन अवश्यम् अत्र आगन्तव्यम् एव । तदा अस्मभ्यं दातव्यानि विंशतिरूप्यकाणि सः प्रत्यर्पयिष्यति एव'' इति ।

गोपालस्य वचनानुसारं तस्मिन् सायङ्काले एव धनिकः आपणम् आगत्य रामनाथं गोविन्दं च उद्दिश्य असमाधानेन एव उक्तवान् - ''भवतः कर्मकरः मुग्धः उत अननुभवी इति न ज्ञायते । यतः तेन दत्तं पादरक्षाद्वयम् अपि एकस्य एव पादस्य'' इति ।

अनुक्षणं रामनाथः - ''क्षम्यतां स्वामिन्! अनवधानात् तथा जातं स्यात्'' इति उक्त्वा गोपालम् उद्दिश्य कोपम् अभिनयन् उक्तवान् - ''किं रे एतत्? वाम-दक्षिणपादयोः आकारे भेदः भवति एव । तं परिशील्य भवता दातव्या खलु पादरक्षा ?'' इति ।

एतत् वचनं श्रुत्वा शान्तकोपः सः धनिकः योग्यां पादरक्षां स्वीकृत्य ततः निर्गतवान् ।

धनिकस्य निर्गमनस्य अनन्तरं रामनाथः गोविन्दम् उद्दिश्य - ''गोपालेन योग्या बुद्धिमत्ता प्रदर्शिता । अनुभविना कृतस्य कार्यस्य एव विशेषप्रयोजनम् अस्ति इति अद्य अवगतं मया । अतः गोपालः एव एतस्मिन् उद्योगे अनुवर्ततां नाम'' इति ।





# महाभारतम्

विश्वकर्मणा सृष्टम् इन्द्रप्रस्थनामकं नगरं स्वराजधानीं मत्वा पाण्डवाः स्वराज्यं श्रद्धया पालितवन्तः । कालक्रमशः तेषां राज्यं प्रगतिपथम् आयातम् ।

तेषु दिनेषु मुनिः नारदः युधिष्ठिरस्य कष्टसुखादिकं विचारयितुम् आगतवान् । युधिष्ठिरः सहोदरैः सह नारदं सादरं स्वागतीकृत्य पादपूजां कृतवान्, सुखासने तम् उपवेश्य साष्टाङ्गं नमस्कृतवान् च ।

द्रौपदी अपि अन्तःपुरात् आगत्य नारदं भक्त्या नमस्कृतवती । नारदः ताम् आशिषा अनुगृहीतवान् ।

अनन्तरं नारदः पाण्डवान् उद्दिश्य - ''भवतां पञ्चानाम् अपि द्रौपदी एका एव पत्नी अस्ति । एतस्मात् कारणात् भवत्सु अन्तःकलहः उत्पद्येत । एतस्य निवारणार्थं भवद्भिः केचन नियमाः पालनीयाः । एतादृशेषु विषयेषु अत्यन्तम् आत्मीयाः अपि कदाचित् विमुखाः भवन्ति'' इति उक्त्वा सुन्दोपसुन्दयोः कथाम् आरब्धवान् ।

निकुम्भनामकः हिरण्यकशिपुवंशे जातः । सुन्दः उपसन्दः च निकुम्भस्य पुत्रौ । तौ सर्वदा मिलित्वा एव तिष्ठतः स्म । तादृशी आत्मीयता आसीत् तयोर्मध्ये ।

कदाचित् तयोः इच्छा जाता यत् - त्रयः लोकाः अपि जेतव्याः इति । तदर्थं तपश्शक्तिं सम्पादयितुम् इच्छन्तौ तौ विन्ध्यप्रदेशे किञ्चित् एकान्तस्थलं चित्वा

अर्जुनस्य तीर्थयात्रा

तत्र घोरं तपः आरब्धवन्तौ । ताभ्यां क्रियमाणस्य तपसः प्रभावात् विन्ध्यगुहासु अग्निः उत्पन्नः । तस्मात् समग्रम् अरण्यम् अग्निना धूमेन च आवृतम् अभवत् ।

सुन्दोपसुन्दयोः तपसः कारणात् भीताः देवताः तपोभङ्गार्थं तयोः पुरतः रत्नवज्राणां राशिं महिलाः च सृष्टवत्यः ।

एतस्मात् अपि सुन्दोपसुन्दौ न विचलितौ । अनन्तरं देवताः पुनः किञ्चन दृश्यं सृष्टवत्यः । तत्र सुन्दोपसुन्दयोः पुरतः तयोः मातापितरौ पत्नीपुत्रान् च राक्षसाः पीडयन्तः आसन् । पीडां सोढुम् अशक्ताः ते 'रक्षतु, रक्षतु' इति सुन्दोपसुन्दौ प्रार्थयन्तः आसन् । एतस्मात् अपि सुन्दोपसुन्दौ न विचलितौ ।

तदा ब्रह्मा प्रत्यक्षीभूय त्रिलोकं जेतुं या शक्तिः आवश्यकी, तया शक्त्या विविधैः अस्त्रैः च सुन्दोपसुन्दौ अनुगृहीतवान् । एतस्मात् अतृप्तौ तौ 'अमरत्वेन आवाम् अनुगृह्णातु' इति ब्रह्माणं प्रार्थितवन्तौ । किन्तु ब्रह्मा एतत् न अङ्गीकृतवान् । अपि तु सः तौ वरेण अनुगृहीतवान् यत् - अन्यस्मात् कस्मात् अपि भवतोः मरणं न भविष्यति इति । परस्परं मारणेन एव मरणं भविष्यति इति ताभ्यां न ज्ञातम् एव । चिरञ्जीवित्वं प्राप्तम् इत्येव तौ चिन्तितवन्तौ ।

एवंप्रकारेण ब्रह्मणः सकाशात् वरं प्राप्य सुन्दोपसुन्दौ ससैन्यम् इन्द्रलोकं गत्वा इन्द्रलोकं जितवन्तौ । अनन्तरं पाताल-लोकं स्वाधीनीकृत्य, भूलोकं गत्वा तत्र जनेषु भयं जनितवन्तौ । सुन्दोपसुन्दयोः



एतत् कार्यं ज्ञात्वा ब्रह्मा विश्वकर्माणम् आहूय तस्य द्वारा 'तिलोत्तमा'नामिकां त्रिलोकसुन्दरीं सृष्ट्वा तां सुन्दोपसुन्दयोः समीपं प्रेषितवान् ।

कस्याश्चित् नद्याः तीरे पुष्पाणि अवचिन्वतीं तिलोत्तमां दृष्ट्वा तस्याः सौन्दर्येण नितराम् आकृष्टौ सुन्दोपसुन्दौ परिणेतुम् इच्छन्तौ तां गृहीतवन्तौ ।

"आवयोः भवती कं परिणेतुम् इच्छति?" इति तां पृष्टवन्तौ सुन्दोपसुन्दौ ।

"यः अधिकः शक्तिमान् अस्ति, तं परिणेष्यामि" इति उक्तवती तिलोत्तमा ।

उभयोर्मध्ये कः बलवत्तरः इति ज्ञातुमिच्छन्तौ तौ गदायुद्धं कृत्वा उभौ अपि मरणं प्राप्तवन्तौ ।



एवं नारदः सुन्दोपसुन्दयोः कथां पाण्डवान् उक्त्वा – "भवन्तः परस्परं सौहार्दरक्षणार्थं कञ्चित् नियमं पालयन्तु । नियमपालनं भवतां हिताय एव भविष्यति" इति उक्तवान् ।

नारदस्य वचनम् अङ्गीकृत्य पाण्डवाः कञ्चित् नियमं कृतवन्तः । नियमानुसारं द्रौपदी एकं वर्षम् एकेन सह एव निवसेत् । द्रौपदी यस्मिन् गृहे निवसति, तद्गृहम् अन्येन केनापि न गन्तव्यम् । अकस्मात् गतं चेत् तेन एकं वर्षं यावत् ब्रह्मचर्यया वनवासं कृत्वा तीर्थयात्रा करणीया ।

पाण्डवैः कृतम् एतं नियमं श्रुत्वा अतीव सन्तुष्टः नारदः – "एतस्य नियमस्य पालनेन भवत्सु कलहः द्वेषः वा न उत्पद्यते । भवन्तः सुखेन जीविष्यन्ति" इति उक्त्वा ततः निर्गतवान् ।

पाण्डवैः कृतस्य नियमस्य अनुसारं द्रौपदी एकैकं वर्षम् एकैकेन सह यापयति स्म ।

कदाचित् युधिष्ठिरस्य गृहस्य पुरतः स्थित्वा रुदन्तं कञ्चित् ब्राह्मणं दृष्ट्वा अर्जुनः पृष्टवान् – "स्वामिन्! किमर्थं भवान् रोदनं कुर्वन् अस्ति?" इति ।

तदा ब्राह्मणः उक्तवान् – "मम गावः धर्मात्मनां भवतां रक्षणे आसन् चेदपि चोरैः अपहृताः अभवन् । एतस्मात् अतीव दुःखितम् अपि मां कोऽपि न पृच्छति । गावः नष्टाः जाताः इत्यतः मम सन्ध्या-



वन्दनादिकार्यं स्थगितम् अस्ति । अतः कृपया भवान् मम धेनूः अन्विष्य ददातु'' इति ।

''भवान् दुःखं मा करोतु । भवतः धेनूः अन्विष्य आनेष्यामि । भवान् मया सह आगच्छतु । 'भवतः धेनवः कस्यां दिशि गताः इति वदतु'' इति उक्त्वा अर्जुनः धनुर्बाणादिकं स्वीकर्तुं युधिष्ठिरस्य गृहं प्रविष्टवान् ।

तावता अर्जुनः नियमं स्मृतवान् । 'द्रौपदी अस्मिन् वर्षे युधिष्ठिरेण सह निवसन्ती अस्ति । एवं सति इदानीं तस्य गृहस्य प्रवेशः अपराधाय भवति । किन्तु प्रविश्य धनुर्बाणादिकं न आनीयते चेत् कार्यभङ्गः भवति । नियमभङ्गः भवति चेत् दण्डनम् अनुभोक्तुं वा शक्यते । किन्तु कार्यभङ्गः भवति चेत् महती हानिः भविष्यति' इति विचिन्त्य अर्जुनः युधिष्ठिरद्रौपद्योः एकान्तमन्दिरं प्रविश्य युधिष्ठिरस्य अनुमतिं स्वीकृत्य धनुर्बाणादिकं स्वीकृतवान्, ब्राह्मणेन सह गत्वा चोरान् सम्मुखीकृत्य तैः अपहृताः धेनूः ब्राह्मणाय दापितवान् च ।

अनन्तरम् अर्जुनः गृहं प्रत्यागत्य ज्येष्ठान् नमस्कृत्य ततः युधिष्ठिरसमीपं गत्वा उक्तवान् - ''द्रौपद्या सह निवसतः भवतः एकान्तमन्दिरं प्रविशता मया नियमः उल्लङ्घितः अस्ति । तस्मात् प्रायश्चित्तरूपेण अहम् एकं वर्षं यावत् वनवासं कुर्वन् तीर्थयात्रां करिष्यामि । कृपया अनुमतिं ददातु भवान्'' इति ।

अर्जुनस्य एतस्मात् वचनात् खिन्नः युधिष्ठिरः उक्तवान् - ''अर्जुन! ज्येष्ठानाम् एकान्तमन्दिरं प्रति कनिष्ठानां प्रवेशः न दोषाय । अपि च ब्राह्मणस्य कार्यसाधनार्थं भवता अन्तः आगन्तव्यम् आपतितम् । अतः भवता कोऽपि अपराधः, नियमोल्लङ्घनं वा न कृतम् । मम वचनेषु यदि श्रद्धा अस्ति, तर्हि एतं विषयं विस्मरतु । तीर्थयात्रागमनं मास्तु'' इति ।

तदा अर्जुनः उक्तवान् - ''यदि कश्चित् दोषं करोति, तर्हि वयं तं दण्डयामः । तादृशाः वयं दोषं कृत्वा अपि दण्डनात् उपायेन आत्मनः रक्षणं कर्तुम् इच्छामः यत् तत् न उचितम् । कृपया मां मा निवारयतु ।

मम तीर्थयात्रागमनं तु निश्चितम्'' इति ।

अनन्यगतिकः युधिष्ठिरः अर्जुनस्य वचनम् अङ्गीकृतवान् । अनन्तरम् अर्जुनः वनवासार्थम् उचितं केशविन्यासं कृत्वा वेषं परिवर्त्य अरण्यं प्रति प्रस्थितः । तेन सह केचन ब्राह्मणाः पुण्यकथावाचकाः पुराणिकाः च अपि प्रस्थिताः ।

गृहात् प्रस्थितः अर्जुनः बहूनि तीर्थस्थानानि अटित्वा बहूनां दिनानाम् अनन्तरं गङ्गाद्वारं प्राप्तवान् । तत्र अनेके मुनयः गङ्गायां स्नात्वा होमं कुर्वन्तः, तत्र आहुतिम् अर्पयन्ति स्म । एतत् दृष्ट्वा अतीव सन्तुष्टः अर्जुनः अपि 'स्वर्गस्थस्य पितुः आत्मशान्त्यर्थं श्राद्धकर्मादिकं कृत्वा अग्नये अर्पणीयम्' इति विचिन्त्य स्नानार्थं नदीम् अवतीर्णः ।



तस्मिन् समये उलूपीनामिका नागकन्या अर्जुनस्य सौन्दर्येण आकृष्टा सती तं गृहीत्वा जलान्तर्गतं नागलोकं नीत्वा सुन्दरे भवने स्थापितवती ।

एतस्मात् अतीव आश्चर्यचकितः अर्जुनः तां पृष्टवान् - ''भवती का? भवत्याः पिता कः? कः प्रदेशः भवत्याः? किमर्थम् एतादृशं साहसकार्यं कृतवती भवती?'' इति ।

तदा उलूपी उक्तवती - ''राजकुमार! नागलोकस्य ऐरावतवंशजस्य कौरव्य-नामकस्य पुत्री अहम् । मम नाम उलूपी । मन्मथसदृशस्य भवतः सौन्दर्येण नितराम् आकृष्टा अहं मम अपूर्वशक्त्या भवन्तम् अत्र आनीतवती । अहं भवतः सकाशात् अपत्यं प्राप्तुम् इच्छामि । कृपया मम इच्छां पूरयतु भवान्'' इति ।

''उलूपि! केनचित् कारणेन ब्रह्मचर्यव्रतं स्वीकृत्य अहं तीर्थयात्रां कुर्वन् कालं यापयन् अस्मि । अतः मम व्रतभङ्गं मा करोतु भवती । नो चेत् अहं पापभाक् भविष्यामि'' इति उक्तवान् अर्जुनः ।

किन्तु उलूपी अर्जुनस्य वचनं न अङ्गीकृतवती । अपि तु सा अर्जुनम् उद्दिश्य - ''द्रौपद्याः विषये भवन्तः सहोदराः परस्परं यं नियमम् आचरन्तः सन्ति, तं नियमम् अहं जानामि एव । किन्तु 'ब्रह्मचर्यं पालयन् अस्मि' इति कथनेन न किमपि प्रयोजनम् । भवान् मम

इच्छां न पूरयिष्यति चेत् अहम् आत्महत्यां करिष्यामि । तदा भवान् पापभाक् भविष्यति एव । प्राणरक्षणापेक्षया प्रमुखं पुण्यकार्यम् अन्यत् नास्ति । अतः मां रक्षतु'' इति वदन्ती अर्जुनस्य पादौ गृहीतवती ।

एतद्विषये सम्यक् विचिन्त्य अर्जुनः निर्णीतवान् यत् - तस्याः नागकन्यायाः इच्छा पूरणीया इति । तां रात्रिम् उलूप्या सह यापितवान् सः ।

अनन्तरदिने प्रातः उलूपी अर्जुनाय मार्गं दर्शयन्ती तं गङ्गाद्वारं प्रापितवती । जलचराणां पीडा अर्जुनस्य यथा न स्यात्, तथा वरेण तम् अनुगृह्य उलूपी स्वनिवासं प्रति गतवती ।

उलूपी गर्भवती जाता । केषाञ्चित् मासानाम् अनन्तरं सा इरावतनामकं पुत्रं प्रसुतवती ।

गङ्गाद्वारतः प्रस्थितः अर्जुनः बह्वीषु नदीषु स्नानं कुर्वन् बहूनि तीर्थस्थानानि च अटन् त्रयोदशे मासे मणिपुरनामकं प्रदेशं प्राप्तवान् ।

चित्रवाहनः मणिपुरस्य राजा । चित्रवाहनस्य चित्राङ्गदानामिका सुन्दरी पुत्री आसीत् । तस्याः दर्शनमात्रेण अर्जुने तस्याः विषये अनुरागः उत्पन्नः । सः चित्रवाहनम् उक्तवान् - ''अहं भवतः पुत्रीं चित्राङ्गदां परिणेतुम् इच्छामि'' इति ।

तदा चित्रवाहनः उक्तवान् - ''भवान् मम जामाता भविष्यति इति तु महतः सन्तोषस्य विषयः । किन्तु एकः नियमः अस्ति मम । अस्माकं वंशे प्रतियुगम् अपि एकः एव पुत्रः । किन्तु मम पुत्रः न जातः । अपि तु एका एव पुत्री अस्ति । अतः चित्राङ्गदायां यः पुत्रः जनिष्यते, तं मम पुत्रत्वेन पालयिष्यामि अहम् । एतत् भवता अनुमन्यते चेत् इदानीम् एव भवता सह मम पुत्र्याः विवाहं निर्वर्तयामि'' इति ।

अर्जुनः एतत् अङ्गीकृत्य चित्राङ्गदां परिणीय तया सह त्रीणि दिनानि यावत् उषित्वा ब्राह्मणैः सह दक्षिणसमुद्रतीरं गतवान् ।



# र स वा र्ता:

## अपूर्वा वार्ता

प्रसूतिसमये यमलौ जन्म प्राप्नुतः इति तु सामान्यः विषयः । सामान्यतः ८२ प्रसूतिषु एकवारं यमलयोः जन्म भवति इति श्रूयते । एवमेव ६,४०० प्रसूतिषु सकृत् अपत्यत्रयं



युगपत् उत्पन्नं भवेत् । ५१२,००० प्रसूतिषु एकत्र चत्वारः शिशवः युगपत् जन्म प्राप्नुयुः । पञ्चानां शिशूनां युगपत् जन्म तु ४,१०,०००,०० प्रसूतिषु एकवारं सम्भवति । गते जूनमासे ईजिप्ट्देशीया काचित् स्त्री षट् शिशून् युगपत् प्रसूतवती अस्ति । ३,३००,०००,००० प्रसूतिषु एकवारम् एतादृशप्रसूतिः सम्भवति इति श्रूयते । तया प्रसूतेषु अपत्येषु चत्वारः पुत्राः, द्वे पुत्र्यौ च । एतेषु शिशुषु केचन ८६० ग्राम् – भारयुक्ताः, केचन १.७५ कि. ग्राम् - भारयुक्ताः च आसन् । शस्त्रचिकित्साद्वारा शिशून् बहिः आनीतवतः वैद्यस्य आशयः अस्ति यत् - एते शिशवः अपि आरोग्यवन्तः सन्तः सुखेन जीवन्तु इति ।

## दर्शनेन समानाः सहोदर्यः

केरलराज्यवासिनोः आर्. एस्. पिळ्ळै, वत्सला इत्येतयोः दम्पत्योः चतुर्भ्यः वर्षेभ्यः पूर्वं युगपत् तिस्रः पुत्र्यः जाताः । नीना - नीतु - निम्मीनामिकाः ताः सहोदर्यः सद्यः विद्यालयं प्रवेशिताः सन्ति मातापितृभ्याम् । औन्नत्येन, आकारेण, वर्णेन च समानाः सन्ति इत्यतः ताः अभिज्ञातुम् अशक्ताः शिक्षकाः चिन्ताग्रस्ताः अभवन् । दिनेषु अतीतेषु तासां व्यवहारेण ईषदिव भेदं ज्ञातुं शक्ताः ते । गृहे मातापितृभ्यां पुत्र्यः नीना - नीतु - निम्मीनाम्ना न आहूयन्ते । अपि तु मालु - मीनु - मोलु इति आहूयन्ते । यद्यपि नामानि सुन्दराणि, तथापि कस्याः किं नाम इति समस्या तु इतरेषाम् एव ।

## सर्वेऽपि न्यायवादिनः

एकस्य एव कुटुम्बस्य पञ्च जनाः न्यायवादिनः जाताः सन्ति । केरलराज्यस्य वेलु-जानकीनामकयोः दम्पत्योः रामचन्द्रन्, रामनाथन्, रामभद्रन्, रामराजन्, रमादेवीनामकाः पञ्च पुत्राः सन्ति । ज्येष्ठपुत्रः रामचन्द्रन् १९७१ तमे वर्षे न्यायवादिपदवीं प्राप्तवान् । इदानीं तस्य वयः ४५ वर्षाणि । सम्प्रति सः तिरुचूर्नगरे न्यायवादी अस्ति । रामनाथन् कुन्नङ्कोळं मध्ये, रामराजन् पारावूर्मध्ये च न्यायवादिकार्यं कुर्वन्तौ स्तः । रमादेवी महाराष्ट्रस्थे नासिक्नगरे अस्ति । तस्याः पतिः अशोकन् अपि न्यायवादी एव । रामभद्रन्वर्यस्य पत्नी शीला अपि सद्यः न्यायवादिनी भविष्यति । एतेषां मातापितरौ वृद्धदम्पती सन्तोषेण वदतः - ''अद्यपर्यन्तम् अपि अस्माभिः न्यायालयः न गतः । सः महतः सन्तोषस्य विषयः'' इति ।

# 'भेण्डी'नामकः वृक्षः

ब्रिटिष्नाविकः केप्टन्कुक् १७६९ तमे वर्षे 'पेसिफिक्' महासमुद्रस्थं टाहिटीद्वीपं यदा प्राप्तवान्, तदा तत्रत्यदेवालयसमीपे सुन्दरपुष्पयुताः केचन वृक्षाः तेन दृष्टाः । सः तान् वृक्षान् 'थेस्पीसिया'नाम्ना निर्दिष्टवान् । ग्रीक्-भाषया 'थेस्पीसिया' इत्यस्य अर्थः 'दिव्यम्' इति । अस्माकं देशस्य दक्षिणभागे एते वृक्षाः प्रमुखतया वर्धन्ते ।

एषः वृक्षः आंग्लभाषया पोर्षियावृक्षः इति, टुलीप्वृक्षः इति च उच्यते । एतस्य शाखाः सान्द्रतया छत्राकारेण भवन्ति इति कारणतः 'अम्ब्रेल्ला ट्री' इत्यपि उच्यते । एषः वृक्षः तमिळुभाषया 'पु अरसु' इति, तेलुगुभाषया 'गङ्गरावि' इति, मलयालभाषया 'चन्दामर' इति च उच्यते । हिन्दीभाषया, मराठीभाषया, गुजरातीभाषया च 'भेण्डी' इति उच्यते । बङ्गालीभाषया पञ्जाबीभाषया च एषः 'पराष्' इत्युच्यते ।

वृक्षशास्त्रे एतत् 'थेस्पीसियापाल्नी' इति उच्यते । एतस्य पर्णानि मृदूनि हृदयाकाराणि च भवन्ति । पर्णानां पतनानन्तरम् अपि वृक्षः हरिद्वर्णीयः एव तिष्ठति । पीतवर्णीयानि एतस्य पुष्पाणि कान्तियुतानि भवन्ति । पुष्पाणाम् अन्तर्भागः रक्तवर्णीयः भवति । क्रमशः सः भागः श्वेतमिश्रितरक्तवर्णतां प्राप्नोति । हरिद्वर्णीयाः एतस्य शलाटवः गुच्छाकारेण भवन्ति । पक्वताकाले शलाटवः कृष्णवर्णतां प्राप्नुवन्ति । एते वृक्षाः शैत्यकाले पुष्पाणि फलानि च रक्षन्ति । एतस्य काष्ठम् अतीव दृढं भवति । नौकानिर्माणार्थं, पेटिकानिर्माणार्थं च एतस्य काष्ठस्य उपयोगः क्रियते । एतस्य वृक्षस्य पर्णेषु, पुष्पेषु, फलेषु, काण्डभागे, त्वक्षु चापि औषधगुणाः सन्ति ।



अस्माकं देशस्य ऋषयः - ८

# च्यवनः

भृगोः पत्नी यदा आश्रमे एकाकिनी आसीत् तदा ताम् अपहर्तुम् इच्छन् कश्चित् राक्षसः आगतवान् । तस्मिन् समये सा गर्भवती आसीत् । तदा कश्चित् शिशुः तस्याः उदरात् निर्गत्य राक्षसेन सह युद्धं कृतवान् । एतस्मात् भीतः राक्षसः ततः पलायितः । नवभ्यः मासेभ्यः पूर्वम् एव जन्म प्राप्तवतः तस्य शिशोः 'च्यवनः' इति नाम कृतवन्तौ तदीयौ मातापितरौ ।

च्यवनः प्रौढः जातः । सः नर्मदानद्याः तीरे उपविश्य आध्यात्मविषये चिन्तनम् आरब्धवान् । तं परितः वल्मीकः उत्पन्नः । सः मनसः नियन्त्रणपूर्वकं ध्याने मग्नः आसीत् ।

कदाचित् राजा शर्यातिः सपरिवारं तेन मार्गेण गच्छन् कश्चित् तटाकं दृष्ट्वा तत्रैव स्थितवान् । ततः अनतिदूरे वल्मीकमध्ये च्यवनस्य नेत्रे दृश्येते स्म । शर्यातिना सह आगताः अल्पवयस्काः राजकुमाराः च्यवनस्य प्रकाशमाने नेत्रे उद्दिश्य शिलाखण्डान् क्षिप्तवन्तः । एतस्मात् कुपितः च्यवनमुनिः राजकुमाराणां मातापितॄन् शप्तवान् । अनुक्षणं ते राजकुमाराः अनारोग्येण पीडिताः अभवन् । तदा राजा शर्यातिः च्यवनं नमस्कृत्य क्षमां प्रार्थितवान् । एतस्मात् शान्तकोपः मुनिः शापविमोचनकरणम् अङ्गीकृतवान् । किन्तु सः राजानम् उक्तवान् - ''भवतः पुत्रीं मह्यं दत्त्वा विवाहं कारयतु'' इति । वृद्धाय च्यवनाय पुत्र्याः सुकन्यायाः दानम् अनिच्छया एव अङ्गीकृतवान् शर्यातिः । किन्तु शर्यातिः पुत्री सुकन्या ससन्तोषम् एतं विवाहम् अङ्गीकृतवती ।

सुकन्याच्यवनयोः विवाहः सम्पन्नः । कानिचन दिनानि अतीतानि । अश्विनीदेवते अतिथिरूपेण च्यवनस्य आश्रमम् आगतवत्यौ । ते सुकन्याच्यवनयोः वयसः महदन्तरं ज्ञात्वा 'यौवनेन अनुगृह्णीवः' इति उक्तवत्यौ । किन्तु ते सुकन्यायाः काञ्चित् परीक्षाम् आयोजितवत्यौ । सुकन्या एतत् अङ्गीकृतवती । अश्विनीदेवते अनतिदूरस्थे तटाके निमज्जनं कृत्वा आगतवत्यौ । च्यवनमुनिः यौवनं प्राप्तवान् । किन्तु अश्विनीदेवते अपि च्यवनमुनिः इव दृश्येते स्म । सुकन्या तेषु त्रिषु पतिं च्यवनम् अभिज्ञातवती । परीक्षायाम् उत्तीर्णां ताम् आशिषा अनुगृह्य अश्विनीदेवते ततः निर्गतवत्यौ ।

च्यवनमुनिना रचिताः प्रार्थनाश्लोकाः इदानीम् अपि जनैः श्रद्धया पठ्यन्ते लोके ।



# भवन्तः जानन्ति वा ?

१. अमेरिकाध्यक्षभवनं 'वैट् हौस्' इति नाम कथं प्राप्नोत् ?
२. टिप्पुसुल्तानवर्यस्य राजधानी का ?
३. 'दास् क्यापिटल्'नामकस्य ग्रन्थस्य लेखकः कः ?
४. सबर्मतिसाधुनाम्ना कः प्रसिद्धः ?
५. चित्रोष्ट्र(जीब्रा)जातेः किं वैशिष्ट्यम् ?
६. अहल्याबायीहोल्करवर्या कुत्र वसन्ती राज्यपालनं कृतवती ?
७. 'रोडिसीया'देशस्य अद्यतनं नाम किम् ?
८. रवीन्द्रनाथठागूरवर्यस्य नोबेल्पारितोषिकप्राप्तेः कारणीभूतः ग्रन्थः कः ?
९. प्रथमरोबोट् कदा संशोधितम् अभवत् ?
१०. आर्यसमाजस्य संस्थापकः कः ?
११. प्राचीनतमायाः क्रीडायाः नाम किम् ?
१२. कोलारसुवर्णखनिः कस्मिन् राज्ये अस्ति ?
१३. सः ग्रामः कुत्र अस्ति, यस्मिन् च चाकलेहनिर्माणसंस्था अस्ति ?
१४. गीतगोविन्दं केन विरचितम् ?
१५. 'डैनमेट्' संशोधकः कः ?
१६. भारतस्य राष्ट्रियकांग्रेस्संस्थायाः प्रथमा अध्यक्षा का आसीत् ?

## उत्तराणि

१. अग्नेः अपघातकारणतः या हानिः सम्भूता, सा न दृश्येत इत्यतः सुधालेपनं यत् कृतं तस्य कारणतः ।
२. श्रीरङ्गपत्तनम् ।
३. कार्ल्मार्क्स्वर्यः ।
४. महात्मा गान्धिः ।
५. एकस्य चित्रोष्ट्रस्य शरीरे यादृश्यः रेखाः दृश्यन्ते तादृश्यः अन्यस्मिन् न दृश्यन्ते सर्वथा ।
६. इन्दोर्तः (इदानीन्तनमध्यप्रदेशतः)
७. जिम्बाब्वे इति ।
८. गीताञ्जली ।
९. १६२ तमे वर्षे । अमेरिकादेशे ।
१०. स्वामी दयानन्दसरस्वती ।
११. 'पोलो' ।
१२. कर्णाटकराज्ये ।
१३. बोर्नविल्ले (क्याडबरीसंस्था)
१४. जयदेवेन् ।
१५. आल्फ्रेड्नोबल्वर्यः, यश्च स्वीडिष्देशीयः रसायनशास्त्रज्ञः आसीत् ।
१६. डा ।। अनिबेसेण्ट् । एषा १९१७ तमे वर्षे प्रवृत्तायाः कांग्रेस्महासभायाः अध्यक्षपदवीम् ऊढवी आसीत् ।



# विदेशीयाः पिशाचाः

कदाचित् सायङ्कालसमये विजयनगरतः देवगिरिं प्रति विवाहकार्यक्रमार्थं षड्भिः शकटैः जनाः प्रस्थिताः आसन् । देवगिर्यां स्थिते कृष्णमन्दिरे विवाहः आसीत् । अन्ते विद्यमाने शकटे पाकसामग्रीं स्वीकृत्य पाचकाः उपविष्टवन्तः आसन् ।

यदा देवगिरिनगरं सन्निहितं तदा ज्येष्ठपाचकः ज्ञातवान् यत् कुण्डलिकानां कण्डोलः न आनीतः इति । अतः सः पार्श्वे स्थितस्य रामलिङ्गनामकस्य स्कन्धं स्पृशन् - ''रामलिङ्ग! इदानीं भवान् प्रतिगत्य कुण्डलिकानां कण्डोलं स्वीकृत्य केनचित् भाटकशकटेन श्वः प्रातः आगच्छतु । कथञ्चित् विवाहमुहूर्तः श्वः रात्रौ'' इति उक्त्वा भाटकदानार्थं पञ्चविंशतिरूप्यकाणि दत्त्वा तं ततः विजयनगरं प्रति प्रेषितवान् ।

रामलिङ्गः यावत् ग्रामं प्राप्तवान् तावता अन्धकारः प्रसृतः आसीत् । भाटकदानार्थं दत्तं धनं सञ्चेतुम् इच्छन् सः कुण्डलिकाकण्डोलं स्वीकृत्य समुद्रतीरस्य समीपे स्थितेन समीपमार्गेण प्रस्थितवान् । तच्च पूर्णिमादिनम् आसीत् इति कारणतः सिकतासु सर्वत्र चन्द्रिका प्रसृता आसीत् । सागरतरङ्गाः यदा तीरेण घट्टिताः भवन्ति स्म तदा वायुना सङ्गीतवादनं क्रियमाणम् अस्ति इति भासते स्म ।

रामलिङ्गः एतादृशे वातावरणे एकाकी सन् कदापि प्रवासं न कृतवान् आसीत् । तथापि मनसि विद्यमानं भयं नियन्त्रयन् शब्दं कुर्वतः वृक्षान् पश्यन् सः अग्रे गतवान् । एवं निरन्तरगमनेन सः नितरां श्रान्तः अभवत् । विश्रान्तिं स्वीकर्तुम् इच्छन् सः समुद्रतीरे एव कुत्रचित् कण्डोलं संस्थाप्य उपविष्टवान् ।

किञ्चित्कालानन्तरं पञ्जिकाभिः प्रकाशमाना काचित् नौका तत्र आगता । कयाचित् विचित्रया भाषया सम्भाषमाणाः केचन पिशाचाः नौकातः अवतीर्णवन्तः । तेषां पिशाचानां पृष्ठतः कश्चन कृष्णवर्णीयः पिशाचः हस्तेन एकं दण्डं चालयन् आगत्य नृत्यम् आरब्धवान् । एतत् दृष्ट्वा रामलिङ्गः भयम् उद्वेगं च अनुभूतवान् । तस्य शरीरतः स्वेदः प्रवहति स्म । 'पञ्चविंशतिरूप्यकाणां सञ्चयनार्थं प्रयतमानेन मया प्राणापायः सम्मुखीकरणीयः अभवत् किल' इति चिन्तितवान् सः । तावता रामलिङ्गेन गृहे स्थिता नवोढा पत्नी स्मृता । 'यदि अहम् अत्र तिष्ठेयं तर्हि एते पिशाचाः मां मारयेयुः । इदानीं पलायनमेव वरम् ' इति चिन्तयन् सः कण्डोलं शिरसि आरोप्य पलायनं कर्तुम् उद्युक्तः ।

किन्तु तावता कृष्णवर्णीयः पिशाचः धावन् स्वदण्डेन रामलिङ्गस्य गमनं निवारयन् - ''भोः भ्रातः! भीतिः मास्तु भवतः । विदेशीयानां पिशाचानां पुरतः मम अपमाननं मा करोतु । ते सर्वे पिशाचाः मूलतः पोर्चगीस्प्रदेशीयाः । अहम् एतद्देशीयः पिशाचः । जीवितकाले विदेशाः गन्तव्याः इति अपेक्षा आसीत् मम । किन्तु मम अपेक्षाः पूर्णाः न अभवन् । अतः मरणानन्तरम् एतैः सह पोर्चुगल्देशे वसन् अस्मि अहम् । अतः अत्र अहम् इदानीं द्विभाषी'' इति उक्तवान् ।

तावता विदेशीयाः पिशाचाः तत्र





आगत्य विचित्रभाषया श्वेतपिशाचं किमपि पृष्ठवन्तः । भारतीयः पिशाचः अपि तेषां भाषया किमपि उत्तरं दत्तवान् ।

तावता रामलिङ्गः किञ्चिदिव धैर्यं प्राप्तवान् आसीत् । सः भारतीयं पिशाचं पृष्टवान् - ''एते विदेशीयाः पिशाचाः किं वदन्तः सन्ति?'' इति ।

तदा भारतीयः पिशाचः - ''एषः मनुष्यः उत पिशाचः इति मां पृष्टवन्तः ते । 'भवान् मनुष्यः' इति अहम् उक्तवान् अस्मि'' इति अवदत् ।

पुनः पिशाचेषु कोऽपि वार्तालापः संवृत्तः । श्वेतपिशाचः रामलिङ्गम् उद्दिश्य - ''कुतश्चित् सुगन्धः आगच्छन् अस्ति इति एते वदन्तः सन्ति । भवतः कण्डोले किम् अस्ति?'' इति पृच्छन् कण्डोलस्य आवरणम् अपसार्य दृष्टवान् ।

पिशाचाः सर्वे तं परितः स्थितवन्तः । भारतीयः पिशाचः कण्डोलतः कुण्डलिकाः निष्कास्य तेभ्यः पिशाचेभ्यः यच्छन् - ''एताः अस्माकं देशस्य विशिष्टाः कुण्डलिकाः । सकृत् आस्वादयन्तु भवन्तः'' इति उक्तवान् ।

विदेशीयेभ्यः पिशाचेभ्यः कुण्डलिकाः नितराम् अरोचन्त । पिशाचानां नायकः अन्यान् पिशाचान् तर्जयन् सर्वाः कुण्डलिकाः स्वीकृत्य किमपि उक्तवान् । भारतीयः पिशाचः तस्य वचनस्य अनुवादं कृत्वा रामलिङ्गम् उद्दिश्य - ''पिशाच-नायकः कुण्डलिकाः इष्टवान् अस्ति । यदि मम मरणं न अभविष्यत् तर्हि कुण्डलिकानाम् आस्वादनस्य अवसरः न अलप्स्यत इति सः वदन् अस्ति'' इति उक्तवान् ।

तदा रामलिङ्गः - ''हुं, धिक् एतान् । एतेषां पिशाचानाम् अदृष्टं मम दुरदृष्टस्य कारणं जातम् अस्ति । श्वः एताः कुण्डलिकाः यदि विवाहभोजनसमये न परिवेषयिष्यामः तर्हि तप्तशलाकया पाचकः मम शरीरस्योपरि रेखाः कुर्यात्'' इति वदन् रोदनम् आरब्धवान् ।

भारतीयपिशाचद्वारा रामलिङ्गस्य रोदनस्य कारणं ज्ञात्वा पिशाचनायकः रिक्तं कण्डोलं नीत्वा नौकायाः समीपं गतवान् । ततः आगत्य कण्डोलं

रामलिङ्गस्य पुरतः स्थापितवान् । कण्डोलस्य आवरणं निष्कासितवतः रामलिङ्गस्य महत् आश्चर्यम् अभवत् । यतः कण्डोले प्रकाशमानानि सुवर्णनाणकानि आसन् । रामलिङ्गः तानि नाणकानि पश्यन् भारतीयं पिशाचम् उद्दिश्य – "एतत् विदेशीयं सुवर्णम् अस्माकं देशे उपयोक्तुं शक्नुमः वा?" इति पृष्टवान् ।

तदा भारतीयः पिशाचः – "रामलिङ्ग! भवान् मुग्धः अस्ति । सुवर्णस्य स्वदेशीयं विदेशीयम् इति भेदः नास्ति । स्वर्गे नरके चापि एतस्य विनिमयः कर्तुं शक्यते" इति उक्तवान् । सर्वेऽपि पिशाचाः करताडनं कृतवन्तः । अनन्तरं ते भारतीयं पिशाचं किमपि उक्तवन्तः ।

भारतीयः पिशाचः रामलिङ्गम् उद्दिश्य – "पश्यतु भ्रातः! भवान् भाग्यशाली । यतः एते पिशाचाः महान्तः धनिकाः सन्ति । एते सर्वे पुनश्च पूर्णिमायां तिथौ अत्र आगमिष्यन्ति । तदा कुण्डलिकाभिः सह भवता अन्यानि मिष्टखाद्यानि अपि आनेतव्यानि" इति अवदत् ।

ततः सर्वेऽपि पिशाचाः नौकाम् आरुह्य प्रतिगतवन्तः ।

क्षणमपि व्यर्थम् अकुर्वन् गृहं प्राप्तवान् रामलिङ्गः । गृहप्राप्तिसमये मध्यरात्रः जातः आसीत् । कण्डोलं शिरसि आरोप्य आगतवन्तं पतिं दृष्ट्वा आश्चर्यचकिता पत्नी किमपि प्रष्टुम् उद्युक्ता । तदा रामलिङ्गः हस्तसङ्केतेन एव 'सम्भाषणं मास्तु' इति





रहस्यं भवत्या सर्वथा गोपनीयम्'' इति पुनः पुनः तां स्मारितवान् ।

किन्तु गोपनीयः एषः विषयः प्रतिवेशिन्या सुशीलया ज्ञातः एव आसीत् । सुशीलायाः पत्युः भीमस्य मिष्टखाद्यापणः ग्रामे एव आसीत् । रामलिङ्गस्य सायं गमनं मध्यरात्रे प्रत्यागमनं, गृहे दीपज्वालनम् इत्यादिकं सर्वमपि सा अवलोकितवती आसीत् । अपि च वातायनद्वारा तयोः व्यवहारं सर्वं दृष्ट्वा सा विषयं ज्ञातवती आसीत् ।

गृहम् आगता सा पतिं सर्वं निवेद्य - ''आगामिपूर्णिमायां मया सह भवता समुद्रतीरं प्रति आगन्तव्यम् । पिशाचानां निमित्तम् आवां शकटपरिमितानि मिष्टखाद्यानि नयाव । शकटपरिमितानि सुवर्णनाणकानि प्राप्नुयाम च'' इति आज्ञास्वरेण उक्तवती ।

एतत् श्रुत्वा भीमः - ''तावदेव वा? एतत् बहु सरलं कार्यम्'' इति शिरश्चालनं कुर्वन् उक्तवान् ।

तदा सुशीला कोपेन - ''भवतः बुद्धिः एव नास्ति । तस्मिन् समये एव तत्र रामलिङ्गः अपि आगमिष्यति चेत् कष्टं भवेत् । अतः आवाभ्याम् एवं करणीयम्'' इति पत्युः कर्णे किञ्चित् रहस्यम् उक्तवती ।

पत्न्याः वचनानुसारं भीमः पूर्णिमा यदा सन्निहिता तदा एव नगरं गत्वा पूर्णिमायाः पूर्वदिने प्रत्यागत्य रामलिङ्गस्य पत्नीम्

सूचयन् - ''प्रथमं तावत् द्वारं पिधाय आगच्छतु'' इति मन्दस्वरेण उक्त्वा एकं वस्त्रं भूमौ प्रसारितवान् । तस्य वस्त्रस्य उपरि सर्वाणि सुवर्णनाणकानि स्थापितवान् । एतत् सर्वं दृष्टवत्याः रामलिङ्गपत्न्याः मुखतः आश्चर्येण शब्दाः एव न निर्गताः । रामलिङ्गः प्रवृत्तं सर्वं पत्नीम् उक्त्वा - ''आवां भाग्यशालिनौ । यतः विदेशीयाः पिशाचाः अपि आवाम् अनुगृहीतवन्तः सन्ति । आगामि-पूर्णिमायाः दिने कथञ्चित् नव-नवीनमिष्टखाद्यानि कृत्वा मया समुद्रसमीपं गन्तव्यम् । तदा प्रभूतं धनं प्राप्यते । अनन्तरं ग्रामे मिष्टखाद्यस्य आपणमेव निर्मास्यामः'' इति उक्त्वा - ''किन्तु एतत्

उद्दिश्य – ''भवत्याः माता तीव्रम् अस्वस्था अस्ति । एतं विषयम् उक्त्वा कञ्चित् सेवकमपि प्रेषितवन्तः आसन् भवत्याः गृहजनाः । सः सेवकः इतोऽपि न आगतवान् वा?'' इति पृष्टवान् ।

विषयं श्रुत्वा दिग्भ्रान्तः रामलिङ्गः पत्न्या सह नगरं प्रति प्रस्थितवान् । 'स्वस्य उपायः फलितः' इति सुशीला सन्तुष्टा अभवत् । अतः सा शकटपरिमितानि मिष्टखाद्यानि स्वीकृत्य भीमेन सह चन्द्रिकायां प्रस्थितवती । अर्धरात्रे पिशाचानां नौका पञ्जिकाभिः प्रकाशमाना तीरम् आगता ।

भारतीयः पिशाचः दण्डस्य साहाय्येन मन्दं चलन् सुशीला-भीमयोः समीपम् आगत्य पृष्टवान् – ''कुत्र सः मूर्खः?'' इति ।

तदा सुशीला निर्भयेन – ''सः मूर्खः इदानीम् अहङ्कारं प्राप्तवान् अस्ति । अतः सः न आगतवान् । किन्तु आवाम् एतेषां विदेशीयानां पिशाचानां विषयिण्या भक्त्या मिष्टखाद्यानि निर्माय शकटे पूरयित्वा आगतवन्तौ स्वः'' इति उक्तवती ।

एतत् श्रुत्वा भारतीयः पिशाचः उपहासपूर्वकं – ''इतःपरं खाद्यस्य खादनम् कुत्र? विदेशीयाः पिशाचाः कुत्र? तेन दत्तं मिष्टखाद्यं खादित्वा अनभ्यासकारणतः सर्वेऽपि पिशाचाः अस्वस्थाः । तेषां पिशाचानां नायकः मां सम्यक् ताडयित्वा प्रेषितवान् अस्ति । इतःपरम् एतद्देशे एव मया भवितव्यम्'' इति उक्त्वा समीपस्थेषु गुल्मेषु कुत्रचित् निलीनः अभवत् ।

एतत् दृष्ट्वा भीमः – ''सुशीले, आवयोः दुराशाकारणतः एव एवं प्रवृत्तम् । ऋणं कृत्वा मिष्टखाद्यं कारितवन्तौ आस्व खलु'' इति वदन् हस्ताभ्यां शिरः कुट्टयन् उपविष्टवान् ।

सर्वं दृष्ट्वा सुशीला अपि – ''सत्यम्! सर्वं दुराशायाः फलम् । इतःपरं ग्रामे कथं मुखं प्रदर्शयाव आवाम्? अतः मम मातृगृहं गच्छाव'' इति वदन्ती भीमेन सह ततः प्रस्थितवती ।





# अनुकरणयोग्यं दाम्पत्यम्

पूर्वम् उज्जयिन्यां कश्चित् वणिक् आसीत्। धनिकः चेत् अपि सः स्वभावेन अत्यन्तं सज्जनः आसीत्। तस्य पत्नी सर्वदृष्ट्या अपि पत्यनुकूला एव आसीत्। अतः तयोः दम्पत्योः जीवनम् अनुकरणयोग्यम् आसीत्। किन्तु तयोः जीवने एकः एव कलङ्कः आसीत्। स च पुत्रः सूर्यवर्मा।

सूर्यवर्मा महान् क्रूरी आसीत्। बाल्ये एव दुष्टानां सहवासेन दुर्मार्गी जातः आसीत् सः। पुत्रस्य कारणात् सर्वैः सह व्यवहारसमये तदीयौ मातापितरौ सङ्कोचम् अनुभवतः स्म।

वणिजः मित्रं कश्चित् अर्चकः आसीत्। कदाचित् वणिक् स्वपुत्रस्य विषयं मित्रम् उक्तवान् - ''मम पुत्रस्य दुर्व्यवहारः दिने दिने वर्धमानः अस्ति। प्राप्तवयस्कः यदा भविष्यति तदा सः स्वयं स्वदोषम् अवगच्छेत् इति अहं चिन्तितवान्। किन्तु तत्रापि मया निराशा अनुभूता। अतः कृपया भवान् एव मार्गदर्शनं करोतु - 'कथं सः सन्मार्गं प्रति आनेतव्यः' इति। पुत्रस्य विषये चिन्तां कुर्वती मम पत्नी महान्तं मानसिकं क्लेशम् अनुभवन्ती अस्ति। पुत्रः सन्मार्गं प्रति न आनीतः चेत् सा मरणम् एव प्राप्नुयात्'' इति।

तदा अर्चकः - ''पुत्रस्य एतस्याः स्थितेः कारणं भवन्तौ एव। भवतोः लालनात् मार्दवातिशयात् च सः एवं जातः अस्ति। एतस्मिन् वयसि भवतोः विषये तेन श्रद्धा प्रकटनीया आसीत्। किन्तु सः व्यर्थं कालहरणं कुर्वन् अस्ति। अतः सः कुत्रापि दूरं प्रेषणीयः इति मम अभिप्रायः। तत्र तस्य साहाय्यं कर्तुं कोऽपि न भविष्यति। व्ययीकर्तुम् अधिकं धनमपि न भविष्यति। अनिवार्यतया उपजीविकायै

''पञ्चविंशतिवर्षेभ्यः पूर्वं चन्दमामायां प्रकाशिता कथा''

तेन कोऽपि मार्गः अन्वेष्टव्यः एव भविष्यति । यदा दायित्वं भवति तदा सः स्वयं सन्मार्गं प्रति आगच्छेत्'' इति उक्तवान् ।

वणिजे एषा सूचना अरोचत । अतः सः पुत्रम् आहूय - ''पुत्र! यदि भवान् दूरदेशं गत्वा तत्र उत्तमां कीर्तिं सम्पाद्य आगमिष्यति, तर्हि अहं सन्तुष्टः भविष्यामि । भवान् कं प्रदेशं गन्तुम् इच्छति ?'' इति पृष्टवान् ।

''मां काशीं प्रति प्रेषयतु'' इति उक्तवान् सूर्यवर्मा । तस्मिन् पुण्यक्षेत्रे पापिनः अपि निर्भयेन सञ्चरन्ति इति सः श्रुतवान् आसीत् ।



काश्याम् अर्चकस्य दूरबन्धुः कश्चित् आसीत् । तस्मै एकं पत्रं विलिख्य अर्चकः वणिजः हस्ते दत्तवान् । तत् पत्रं स्वीकृत्य सूर्यवर्मा काशीं प्रति गतवान् ।

अर्चकस्य सूचना फलकारिणी जाता इव । यतः अर्चकस्य बन्धुः यदा पत्रं लिखति स्म तदा सूर्यवर्मणः विषये सदभिप्रायं प्रकटय्य एव लिखति स्म । अर्चकः एतानि पत्राणि नीत्वा वणिजः पुरतः पठति स्म । पुत्रस्य स्वभावे जातं परिवर्तनं श्रुत्वा वणिक् तस्य पत्नी च महान्तं सन्तोषम् अनुभवतः स्म ।

एवं स्थिते कदाचित् तडिदाघातः इव सूर्यवर्माविषयिणी काचित् वार्ता आगता - ''कैश्चित् पानमत्तैः सह कलहसमये सूर्यवर्मणः मारणम् अभवत्'' इति ।

दूरप्रदेशं प्रति गतवति अपि सूर्यवर्मणि परिवर्तनं न आगतम् इति स्पष्टं ज्ञातवान् अर्चकः । एषा दुःखकरी वार्ता कथं वक्तव्या इति न जानाति स्म सः । किन्तु तस्य अन्तरङ्गं वदति स्म यत् सत्यस्य गोपनम् अयुक्तम् इति । 'वणिजः पत्नी अस्वस्था इति कारणतः वणिजम् एकमेव पृथक् आहूय वदामि' इति निश्चितवान् अर्चकः ।

यदा अर्चकः विषयम् उक्तवान् तदा पुत्रस्य दारुणं मरणं श्रुत्वा चकितः अपि वणिक् रोदनं तु न कृतवान् । ''कदाचित् एतादृशस्य प्रसङ्गस्य सम्मुखीकरणं करणीयं भवेत् इति अहं जानामि स्म । तथैव प्रवृत्तम् अपि । दूरप्रदेशं प्रति



प्रेषणेन तस्मिन् परिवर्तनं भवेत् इति या मम निरीक्षा आसीत् सा विफला जाता । आस्तां तावत् सा कथा । किन्तु स्वामिन्, भवान् कृपया एतं विषयं मम पत्नीं मा वदतु । पूर्वमेव सा अस्वस्था । एतां वार्तां सा यदि शृणुयात् तर्हि हृदयाघातेन मरणम् एव प्राप्नुयात् । इतः परं सा अधिककालं न जीवेत् । पुत्रः कुत्रचित् सुखेन अस्ति इत्येव भावयतु नाम सा । भवान् अपि यथापूर्वं, भवतः बन्धुना यादृशं पत्रं लिख्यते स्म तादृशम् एव पत्रं स्वयं विलिख्य मम गृहम् आगत्य पठतु'' इति उक्तवान् वणिक् ।

''तथैव करोमि । भवान् चिन्तां न करोतु । भवतः पत्नी विषयं किञ्चिदपि यथा न जानीयात् तथा करोमि अहम्'' इति उक्तवान् अर्चकः ।

अनन्तरं प्रतिमासं सः स्वयम् एकं पत्रं विलिख्य तयोः पुरतः पठति स्म । ''किं भोः! काशीतः पुनश्च पत्रम् आगतम् अस्ति । भवतः पुत्रः सुखेन अस्ति, सद्यः एव राजास्थाने सः उद्योगं प्राप्नुयात्, आगामिवैशाखपूर्णिमादिने सः राजास्थाने प्रवेशं करिष्यति । भवतोः पुत्रः पारितोषिकं प्राप्तवान् अस्ति । तस्य विवाहविषये स्वयं महाराजः एव चिन्तयन् अस्ति'' इत्यादयः विषयाः भवन्ति स्म तेषु पत्रेषु ।

कदाचित् अर्चकः - ''सः भवन्तौ द्रष्टुम् इच्छति । यदा अवकाशः भविष्यति तदा अनुक्षणं सः अत्र आगमिष्यति'' इति तौ वदति स्म । वणिजः पत्नी अर्चकस्य कथनं श्रद्धया शृणोति स्म । तीव्ररूपेण अस्वस्था चेदपि मुखे किञ्चिदपि वेदनाम् अप्रकटयन्ती सा आनन्देन तिष्ठति स्म । 'एतादृशीं सुशीलां सद्गृहिणीं वञ्चयन् अस्मि खलु अहम्' इति चिन्तयन् अर्चकः अन्तरङ्गे एव दुःखम् अनुभवति स्म । किन्तु 'मया श्रावितया वार्तया सा आनन्दम् अनुभवति किल' इति चिन्तयन् मनसः समाधानम् अपि प्राप्नोति स्म सः ।

एवमेव चत्वारि वर्षाणि अतीतानि । वणिजः पत्न्याः अस्वास्थ्यम् अधिकम् अभवत् । सा क्षयरोगेण ग्रस्ता अभवत् । 'एतस्याः मरणकालः सन्निहितः अस्ति'

इति वैद्यः उक्तवान् ।

कदाचित् अर्चकः ज्ञातवान् यत् वणिजः पत्नी जीवनस्य अन्तिमक्षणान् गणयन्ती अस्ति इति । अतः सः झटिति वणिजः गृहं गतवान् । तत्समये वणिक् गृहे नासीत् ।

आगतम् अर्चकं दृष्ट्वा वणिजः पत्नी - ''स्वामिन्, अहं तु मरणावस्थायाम् अस्मि । अतः वृद्धस्य मम पत्युः रक्षणं भवतः दायित्वम्'' इति उक्तवती ।

तदा अर्चकः तां सान्त्वयन् - ''किमर्थम् अम्ब, अधैर्यम् अनुभवति भवती? भवत्याः पुत्रः काशीतः प्रस्थितवान् अस्ति इति इदानीमेव मया ज्ञातम् अस्ति । काशीतः आगताः केचन यात्रिकाः एतं विषयं मां सुचितवन्तः । भवती शीघ्रातिशीघ्रं पुत्रेण मेलिष्यति'' इति उक्तवान् ।

तदा सा गृहिणी खिन्नवदना भूत्वा - ''सत्यं महोदय! अपरस्मिन् लोके सद्यः एव पुत्रेण सह मम मेलनं भविष्यति । आश्चर्यं मास्तु भोः! पुत्रस्य मरणम् अहं पूर्वमेव ज्ञातवती आसम् । किन्तु काश्यां स्थितः भवतः बन्धुः अत्यन्तं सज्जनः । तस्मै कथं कृतज्ञता समर्पणीया इति न जानामि । पुत्रस्य मरणवार्तां यदि मम पतिः श्रुतवान् स्यात् तर्हि महत् दुःखम् अन्वभविष्यत् । एतावन्ति दिनानि एतं विषयं रहस्यरूपेण गोपितवती अस्मि । इतः परम् अपि एषः विषयः तेन यथा न ज्ञायेत तथा करणं भवतः एव दायित्वम् । एषा एव मम अन्तिमा इच्छा'' इति वदन्ती प्राणत्यागं कृतवती ।

परमसज्जनायाः तस्याः मरणं दृष्टवतः अर्चकस्य खेदः यथा जातः, तथैव सन्तोषः अपि जातः । 'अहो, अनुकरणयोग्यं दाम्पत्यजीवनम् एतयोः ! पुत्रः मृतः इति वार्ता उभाभ्याम् अपि ज्ञायते स्म । तथापि अन्यस्य आघातः स्यात् इति विचिन्त्य तौ परस्परम् एतं विषयं न उक्तवन्तौ एव । प्रातःस्मरणीयौ एतौ' इति चिन्तयन् ततः स्वगृहं गतवान् अर्चकः ।



## चित्रशीर्षिका - स्पर्धा * पारितोषिकं १००/- रूप्यकाणि

विजितां शीर्षिकां फेब्रवरी - १९९६ मासे प्रकटयिष्यामः ।



S.G. Shesagiri



S.G. Shesagiri

* उपरितनं चित्रद्वयं पश्यन्तु । * युक्तां शीर्षिकां परस्पर-सम्बन्धि-वाक्यद्वयेन लिखित्वा डिसेम्बर् - २० तः पूर्वम् एव प्रेषयन्तु । * अनन्तरम् आगतां शीर्षिकां न परिशीलयिष्यामः । * स्पर्धायां विजेता १००/- रूप्यकात्मकं पारितोषिकं प्राप्स्यति । * शीर्षिका समपत्रे (पोस्ट-कार्ड्) एव लेखनीया । तत्र अन्यः विषयः न लेखनीयः । * अधोनिर्दिष्ट-सङ्केताय शीर्षिका प्रेषणीया ।

चन्दमामा(संस्कृतम्) 'अक्षरम्', ८ उपमार्गः, २ घट्टः, गिरिनगरम्, बेङ्गलूरु - ५६० ०८५

---

'सप्टम्बर्'मासस्य चित्रशीर्षिकास्पर्धायाः परिणामः -

प्रथमचित्रम् - स्वच्छीकरोमि धान्यं धरणीगर्भोत्पन्नम् ।

द्वितीयचित्रम् - दर्शयामि तावत्, अत्रैव तां धरणीम् ।

प्रेषकः - जितेन्द्रकुमार पटेल्, १३, गायत्रीनगरम्, बारडोली - ३९५ ६०१ (गुजरात्)




Printed by B.V. REDDI at Prasad Process Private Ltd., 188 N.S.K. Salai, Madras 600 026 (India) and Published by B. VISHWANATHA REDDI on behalf of CHANDAMAMA PUBLICATIONS, Chandamama Buildings, Vadapalani, Madras 600 026 (India). Controlling Editor: NAGI REDDI.